( वेगेन प्रविशति ललितलतिका )

**ललित०** । हा धिक् हा धिक्, बन्धुजनानां सुपरामर्शं न श्रुत्वा दृढ़-निर्बन्धा मम प्राणसखी आपतिता घोरतरे विपत्सागरे, किन्तु किं करोमि किं करोमि मन्दभाग्याहम् ? शक्तिविहीना कौशलरहिता चाहम् । तथापि निपताम्यहम् अस्मिन् क्षिप्र-नदीवक्षसि मम प्राणसखीम् अन्वेष्टुम् ।

( झम्पोद्यता )

**अरुण०** । भद्रे, विरमतु विरमतु भवती अस्मात् अर्वाचीनकर्मणः । किन्तु, किं भवत्याः सखी मूढ़ा मत्ता वा ? अन्यथा कथं सा अस्यां भीषण-तटिन्याम् अवतीर्णा दुःसाहसभरेण ? भवतु, वृथा कालव्ययो न करणीयो मुहूर्तमात्रमपि । ततो याम्यहं तस्या उद्धारार्थम् ।

**तरुण०** । प्रियबन्धो मम ! विपुल-विपत्-सङ्कुलम् इदं नदीवक्षः—तवापि नावतरणयोग्यम् ।

**अरुण०** । जाने अहं तत् सम्पूर्णतया । तथापि, आर्तरक्षणं हि पुरुषधर्मः । ललनायां विपद्यमानायां कथमहं निश्चलस्तिष्ठामि ?

**तरुण०** । ततोऽहमेव यामि तस्या उद्धारार्थम् ।

**अरुण०** । न न न, अहं त्वत्तो बलवत्तरः कुशलतरः स्थिरतरश्च, ततोऽहमेव यामि ( वेगेन प्रस्थितः ) ।

**ललित०** । हा धिक्, हा धिक्, हा धिक् ! अनर्थको विपत्पातः सर्वेषाम् अस्मद्धेतोः ।

**तरुण०** । भद्रे ! धैर्यं धारयतु भवती । भवितव्यं भविष्यति सर्वदा, भवितव्यं भविष्यति सर्वथा ( उभौ तिष्ठत उद्वेगाकुलौ ) ।

( ततः प्रविशतः श्रान्तः अरुणकिरणः, नतमुखी रोरुद्यमाना कमलकलिका च)

**ललित०** । ( आनन्दोत्फुल्ला ) प्राणाधिके मम ! सत्यं नु त्वम् उपस्थिता मत्सम्मुखे ? अथवा, अयं मम मानसभ्रमः केवलम् ।

**कमल०** । न न, प्राणसखि ! नायं तव मानसभ्रमः, इयं हि सत्यघटना, यतो वस्तुभूताहं सत्यमेव दण्डायमाना त्वत्सम्मुखे अस्य महात्मनः परम-कृपया ।

( अरुणकिरणमुद्दिश्य ) आर्य ! नास्ति मम भवत्समीपे कृतज्ञताप्रकाशनस्य भाषा ! भवान् स्वजीवनं तुच्छीकृत्य मम जीवनं रक्षितवान् अतुलानुग्रहभरेण । महापुरुषो भवान्, गृह्णातु सानुग्रहं मम मर्मोत्थं श्रद्धाञ्जलिम् ।

**अरुण०** । आर्ये ! सामान्यः साधारणो जनोऽहम् । इदं ममावश्य-कर्तव्य-कर्म—परसेवनम्, तदर्थं नाहं धन्यवादार्हः । भवतु, विशेषक्लान्ता जाता भवती भीषण-जलयुद्धानन्तरम् । ततः कृपया गृहं गत्वा विश्रामसुखं लभतां भवती ।

**कमल०** । भवानपि तथा करोतु कृपया ।

**ललित०** । न जाने अहमपि कथं भवच्छ्रीपादपद्मे मम भक्तिपुष्पाञ्जलिं प्रदातुं शक्नुयाम् । इयं मम प्राणप्रतिमा सखी कमलकलिका, अहन्तु तस्या दीनहीनसहचरी ललितलतिका ।

**अरुण०** । भद्रे ! नाहं कृतज्ञताभाजनं कस्यापि । तथापि भवत्याः स्नेहप्रसूतम् अर्घ्यं सादरं सानन्दं सकृतज्ञताकञ्च मस्तके धारयामि । अरुण-किरणनामधारी दीनहीन-जनोऽहम, अयं मम प्राणप्रतिमः सखा तरुणतपनः । कल्याणं सर्वेषां भूयात् ( सर्वे प्रस्थिताः ) ।

( विभुवन्दना )

विहर मनसि मम वितमसि विभुवर ! मरणान्तम् ।
भवतु हृदयमेतदुदयदरुण-किरणकान्तम् ॥२०॥
चरणशरण एष मरण-कुक्षिगहन-लीनः ।
उद्धर पर-करुणाकर ! तमिति वदति दीनः ॥२१॥
भूमिरजनि भीमरजनि-गर्जदशनिभीता ।
प्रापय करमतिसुन्दर ! तिष्ठतु दरवीता ॥२२॥

[ इति प्रथम-दृश्यम् ]

—०—

## द्वितीय-दृश्यम्

[ प्रणयविकशनम् ]

स्थानम्—कुञ्जवनम् ।

समयः—प्रभातम् ।

( ततः प्रविशति कमलकलिका उन्मनाः )

**कमलकलिका ।** अरुणकिरणः अरुणकिरणः अरुणकिरणः ! सुमधुरतमं सुमोहनतमं सुयोग्यतमं हि नामेदम्—अरुणकिरणः । सत्यं नु अरुणकिरणवत् वरेण्यः, अरुणकिरणवत् सुधन्यः, अरुणकिरणवत् अनन्यो ममारुणकिरणः । एष शुचि-शुभ्र-स्वच्छ-स्निग्धः अरुणकिरण एव मम अन्तरस्य अन्तरतम-प्रदेशे प्रविश्य मम जीवन-कमलकलिकां विकाशितवान् निमेषेण । अहो ! अपूर्वमेतद् विकाशनम् ! दिशि दिशि सहस्र-दलानि प्रसार्य, दिशि दिशि मधुर-सुगन्धं विस्तार्य, दिशि दिशि मोहन-मधु-रसं निपिच्य पूर्णप्रस्फुटिता इयं मुद्रिता क्षुद्रा तुच्छा कमलकलिका सहसा । अहो आनन्दः ! अहो सार्थकता ! अहो सौभाग्यं मम ।

अधिनिशमुपयान्त्या मुद्रणामन्धकारे
विरहकृश-शरीरं धारयन्त्या नितान्तम् ।
अरुणकिरण-कान्तं चिन्तयन्त्या सखेदं
कमलकलिकया हा नीयते रात्रिकालः ॥२३॥

तदनु विधिविधानादूषसोऽन्ते दिनेशः
स्वयमुदयति दूनां तां विधातुं सहर्षाम् ।
प्रचलित-घटनेयं प्राकृती दृश्यते या
किमु नियतिवशान्मे जीवने सा प्रवृत्ता ? ॥२४॥

( ततः प्रविशति उद्भ्रान्तः अरुणकिरणः )

**अरुणकिरणः ।** कमलकलिका कमलकलिका कमलकलिका ! सुमधुरतमं सुमोहनतमं सुयोग्यतमञ्च नामेदम्—कमलकलिका ! कमलकलिकावत्

कोमला, कमलकलिकावद् विमला, कमलकलिकावत् सरला मम कमल-कलिका ! मम जीवनस्य अरुणकिरणो यदीमां कमलकलिकां विकाशयितुं न शक्नोति, ततः किं वा तस्य फलम्, किं वा तस्य सौन्दर्यम् माधुर्यम् ऐश्वर्यं वा ? ततो भविष्यन्ति मम जीवनस्य सर्वसौन्दर्य-माधुर्यैश्वर्याणि परिम्लानानि परिक्लिष्टानि परिभूतानि च सम्पूर्णतया। अहो कष्टम ! अहो दौर्भाग्यम् ! अहो शून्यत्वम् !

तिमिर-दनुजभीतः खात् समुत्सारितोऽयम्
अरुणकिरण-कान्त' सायमुत्कण्ठमानः।
विगणयति मुहूर्तं तं यदा बोधनार्थं
स कमलकलिकायाः प्रेषयेदूष-दूतीम ॥२५॥
तदनु मिलनलग्ने जायमाने सुदैवात्
अरुणकिरण-कम्रस्पर्शनेन क्षणेन।
कमलकलिरियं स्यान्मुक्तमुद्रा मुहूर्तात्
प्रियतमसुखसम्पद्वर्धिनी शान्तकान्तिः ॥२६॥
प्रत्यहं जायमानेयं घटना सर्वगोचरा।
जीवनेऽस्मिन ममाधन्ये किमु जाता सुखप्रदा ॥२७॥

( सहसा दृष्ट्वा ) अहो ! का नु एषा देवबाला ? एषा हि सा—सा सा सा। मम प्राणमनोजीवनानां कमलकलिका, मम प्राणमनोजीवनानां रुचिर-रूपधारिका, मम प्राणमनोजीवनानां रमणरससेचिका, मम प्राणमनोजीवनानां शोभन-सौरभवर्षिका। अहो आनन्दः ! अहो सौभाग्यम् ! अहो पूर्णत्वम् !

( उपसृत्य ) भद्रे ! अभिवादये भवतीम् अहम्। किं भवती जाता सम्पूर्ण-सुस्था साम्प्रतम् ? उद्वेगाकुलं मम मनः एतदर्थं भृशम्।

**कमल०**। अद्यापि असंख्य-धन्यवादान् भवन्तं विज्ञापयामि भवतो निःस्वार्थ-परसेवनार्थम्।

**अरुण०**। परसेवनार्थम् ? किन्तु किं भवती मम परा ? न न न, कदापि न, कदापि न, कदापि न। यदि दोषान् मम न गणयति भवती, तदा वदामि

यद् भवती मम जन्मजन्मान्तरीय-प्राणसखी, जन्मजन्मान्तरीय-मनोबान्धवी, जन्मजन्मान्तरीय-जीवनसङ्गिनी।

कमल०। (सलज्जम्) आर्य! कथं तत् सम्भवति? नाहं परिचिता भवता, नापि दृष्टपूर्वा कदाचिदपि। ततोऽस्मिन्नेव जन्मनि अहं भवता सह सम्पर्कशून्या सर्वथा—का वा कथा जन्मजन्मान्तरस्य?

अरुण०। (विहस्य) अयि सरले! किं चाक्षुषदर्शनमेव सर्वम्? न न न, कदापि न, कदापि न। वस्तुतो देहेन्द्रियेभ्यो वहूर्ध्वं राजते मनः, मनसोऽपि वहूर्ध्वं राजते आत्मा मनसा सह मनसो मेलनम्, आत्मना सह आत्मन आवन्धनं तु शाश्वतम्—न तत्र विद्यते स्थानं कालः पात्रं संख्या वा।

कमल०। (सलज्जम्) सत्यम्?

अरुण०। सत्यं पूर्णसत्यं चिरसत्यम्। किं न जानाति भवती एतत् सर्वम्? क्षुद्र-मुद्रित-तरुण-कमलकलिका न जानाति अरुणकिरणं कदाचिदपि मुहूर्तमात्रमपि, तथापि सम्पूर्णपरिचितः प्रथमपतितः अरुणकिरणस्तां विकाशयति मुहूर्तमध्येन पूर्णतया। निष्पाप-निर्मद-कुरङ्गी न जानाति वंशीध्वनिं कदाचिदपि कियन्मात्रमपि, तथापि सम्पूर्णपरिचितः प्रथमझङ्कारी वंशीध्वनिस्ताम् उद्वेलयति निमेषमध्येन पूर्णतया। सरल-विमल-चकोरी न जानाति चन्द्रकिरणं कदाचिदपि लेशतोऽपि, तथापि सम्पूर्णपरिचितश्चन्द्रकिरणस्तां मोहयति निमेषेण पूर्णतया। तद्वत्-तद्वत्—।

कमल०। (आशान्विता) किं तद्वत्?

(सहसा प्रविशति कुवेरराजवंशीयः दाम्भिको दुर्धर्षः प्रचण्डप्रतापनामा कश्चन लक्ष्यानुसन्धानतत्परो यक्षः।)

प्रचण्डप्रतापः। (उच्चैर्हसन्) हाः हाः हाः! कुत्र पलायिष्यसे त्वं रे रे निर्बोधे विहङ्गमे? किं न जानासि त्वं कस्य हस्ते पतितासि साम्प्रतम्? अहं कुवेरराजवंशीयः प्रचण्डप्रतापशाली प्रचण्डप्रताप-महोदयः। अहं तव कोमल-सरस-सुस्वादु-मांसभक्षणलोलुपो जनः, को मां निवारयितुं समर्थः? हाः हाः हाः! जानीहि तत् मूढ़े, जानीहि तत् सुनिश्चितम्। ततो वृथा

पलायनप्रचेष्टां त्यक्त्वा आगच्छ स्वेच्छया मम पदतले—हाः हाः हाः ! तदेव तव वैकुण्ठम्—मम मुखाभ्यन्तरे चर्विता भूत्वैव त्वं प्राप्स्यसि तव स्वर्गधाम, तव ब्रह्मलोकम्, तव शाश्वतमोक्षम् । हाः हाः हाः ! ( लक्ष्यमुद्दिश्य शर-सन्धानं करोति ) ।

**कमल०** । ( व्याकुला ) आर्य ! अतीव पवित्रम् इदं कुञ्जवनम्—शत-सहस्र-साधकानां साधनक्षेत्रं मोक्षपथः अमृत-कुण्डञ्च । ततोऽत्र प्राणि-हत्या न करणीया कदापि ।

( विहङ्गमां करतालियोगेन अपसारयति लक्ष्यपथात् )

**प्रचण्ड०** । ( शरं त्यक्त्वा स्वगतम् ) अहो ! का नु एषा ? अपूर्वरूप-लावण्यमयी इयं ललना मुहूर्तमध्येन माम् उद्वेलयति अपूर्वभावेन । ( कमल-कलिकाम् उद्दिश्य ) अरे रे मोहने बालिके ! का त्वम् ? किं वा तव नाम ? क्व वा निवासः ? कथय मां सर्वम् अकपटम् अविलम्बम् ।

**अरुण०** । ( सक्रोधम् ) महाशय ! नारीजनेन सह भद्रव्यवहारो हि काम्यः सर्वदा ।

**प्रचण्ड०** । हुम् ! को नु एषः ? एष नारीरक्षको महावीरः ? अरे रे पाषण्ड ! स्पर्धाशील असमसाहस जन ! सावधानो भव—भृशं सावधानो भव । किं न जानासि त्वं मूढ ! कोऽहम् ?

**अरुण०** । तेन मम किम् ? उच्चा वा नीचा वा, धनिनो वा दरिद्रा वा पण्डिता वा मूर्खा वा—सर्वे जना एव सभ्या भव्या भद्रा नम्रा भवन्तु—इत्येवालङ्घ्यं धर्मानुशासनम् ।

**प्रचण्ड०** । हाः हाः हाः—एष हि प्राचीनो गलितः पलितो नियमः केवलम् । शृणु रे दुःसाहस जन ! शृणु मम नव-नियमान्—"उच्चाश्चर्वयन्तु सततं नीचान्, धनिनः पीडयन्तु दरिद्रान्, पण्डिताः ताडयन्तु मूर्खान्" इति । पूजय एतान् नवीन-नियमान् ।

हाः हाः हाः ! को वा त्वं माम् उपदेष्टुम् ?- गगनस्पर्शिनी तव स्पर्धा ! भवतु, नाहं कामये अनेन दुर्विनीतेन सह वाक्यालापेन वृथा कालक्षयं कर्तुम् ।

सम्मुखे मम विराजमाना अमृतनिर्झरिणीसमा इयं वाला—वाञ्छामि तां पातुम् अञ्जलिं पूरयित्वा। ततो दूरं गच्छ रे रे दुष्टजन! मम प्रमोदपथे मा भव वाधास्वरूपः। सुन्दरि! आगच्छ मया सह प्रेमकेलिकरणार्थं सत्वरम्, कानि प्रसाधनद्रव्याणि त्वम् आद्रियसे? केवलं कथय तन्माम्, तव मनोवासना परिपूर्णा भविष्यत्यचिरेण।

**कमल०**। (सरोषम्) किं कथयति भवान्? किं न जानाति भवान् नारीणां सम्मानम्? नारी न हेलनवस्तु, खेलनसामग्री विलासोपकरणं वा। नारी मातृस्वरूपा मातृवत् पूज्या च।

**प्रचण्ड०**। हाः हाः हाः—नेयं ललना केवलं सुमिष्टस्वरूपा, परन्तु विद्यन्ते अस्याम् अम्ल-कटु-कषायादिगुणाश्च। हाः हाः हाः। भवतु अमिश्र-मिष्टापेक्षया अन्यगुणमिश्रित-मिष्टं मोहनतरम्, तथैव मम मनोहारिणी वाला। प्राणप्रिये कन्यके मम! भव मम माता, को न वाञ्छति मातरं प्राप्तुं पथिकोणेषु पथिकोणेषु अनायासेन—किन्तु तदुपरि भव मम प्रिया, मम लीलासङ्गिनी, मम विलाससहचरी—प्राप्स्यसि त्वं यथेच्छद्रव्याणि सततम्, करिष्यसि त्वं यदेव वाञ्छसि तदेव सम्पूर्णम्, भविष्यसि त्वं सर्वेषां सम्राज्ञी सुनिश्चितमेव। किं न एते परमलोभनीयाः प्रस्तावाः? ततो न विलम्बः करणीयस्त्वया। अधैर्यं जातं मे मनः—तत आगच्छ मया सह त्वरितम्। (उपसरति)

**कमल०**। दूरं गच्छ—दूरं गच्छ रे दुर्वृत्त! मा कुरु मम मार्गावरोधम्। न कामये अहं तव विलासद्रव्याणि, साम्राज्यं वा—कदापि न, कदापि न, कदापि न।

**प्रचण्ड०**। हाः हाः हाः! किन्तु सुन्दरि! जगन्न चलति तवेच्छया केवलम्—तवेच्छाया वलवत्तरा ममेच्छा। ततः···

**अरुण०**। ततोऽहं त्वां निमेषेण पदतलेन चूर्णविचूर्णं करिष्यामि, यदि त्वं न गच्छसि दूरं मुहूर्तमध्ये।

२

**प्रचण्ड०।** ( स्वगतम् ) अहो किं करोमि ? अतीव बलशाली परिलक्ष्यते अयं जनः। ततः पश्चादपसरणन्तु अधुनात्र युक्तियुक्तम्।

( प्रकाशम् ) अरे रे मनोहारिणि मम ! अधुना त्वं मुक्तिप्राप्ता मत्-कवलात्। किन्तु जानीहि मम प्राणप्रतिभे ! जानीहि सुनिश्चितमेव यत्, न प्रचण्डप्रतापस्त्यक्ष्यति तस्याभीष्ट-लक्ष्यं, कदापि न। ततो जानीहि सुनिश्चित-मेय यत्—त्वद्विताड़ित-विहङ्गमा-विनिमयेन त्वमेव भविष्यसि मम मुखाभ्यन्तरे चर्विता मम पदतले निष्पिष्टा, मम शरेण छिन्न-विच्छिन्ना—जानीहि तत् सुनिश्चितमेव—सुन्दरि ! जानीहि तत्। हाः हाः हाः ( वेगेन निष्क्रान्तः )।

**कमल०।** हा धिक् हा धिक् ! न जाने किमिदम्—न जाने।

( वेगेन निष्क्रान्ता )

**अरुण०।** हा धिक् ! हा धिक् ! प्रेमनिवेदनस्य प्रकृष्टकाले केयं वाधा ? प्रस्फुटित-पद्मवने मत्तकरीव स सर्वं विनाशितवान्। न जाने किमिदम्—न जाने। ( वेगेन प्रस्थितः )

### प्रेमदेवतावन्दना

प्रणय-देवता विनयवर्जिता नियम-निर्जिता कुटिला।
तनुते नृपतिं दासप्रकृतिं दासं नृपमिव जटिला ॥२८॥
दधती भेदं जनयति खेदं मिलनं घटयति भूयः।
युवतीं यूना वालं शिशुना किलयति गलितासूया ॥२९॥
त्रिजगद्वासा त्रिभुवनदासा त्रिकालहासा धन्या।
निसर्ग-मधुरा सदसद्विधुरा त्रिवर्गरुचिराऽजन्या ॥३०॥

[ इति द्वितीय-दृश्यम् ]

## तृतीय-दृश्यम्

[ प्रेमबाधा ]

**स्थानम्**—यक्षपुरी ।

**समयः**—प्रभातम् ।

( ततः प्रविशतः कमलकलिकायाः पिता अरिन्दमः, माता सुदर्शना च )

**अरिन्दमः** । कुत्र मम प्राणप्रिया कन्यका कमलकलिका ? बहुकालं ताम् अदृष्ट्वा व्याकुलं जातं मे मनः । सा हि मम नयनयोर्दीप्तिः, सा हि मम कर्णयोर्गीतिः, सा हि मम करयोः शक्तिः, सा हि मम पदयोर्गतिः, सा हि मम सर्वस्वम् ! कुत्र सा देवि ! कुत्र सा ?

**सुदर्शना** । ( विहस्य ) नाथ मा अकारणं व्याकुलो भव । सा गता कुञ्जवने सखीभिः सह । मन्ये, सा आगमिष्यति सत्वरम् अत्र ।

( ततः प्रविशति प्रचण्डप्रतापः प्रबलवेगेन )

**प्रचण्डप्रतापः** । ( उच्चैः ) को वसति अत्र ? को वा गृहस्वामी ? आगच्छ आगच्छ सत्वरम्, नाहं कामये विलम्बं मुहूर्तमात्रम् ।

**अरिन्दमः** । मान्य अतिथिवर ! कृपया आसनं परिगृह्णातु भवानत्र ! भवतः का सेवा मया करणीया ?

**सुदर्शना** । श्रद्धेय महाशय ! पाद्यार्घ्यं गृह्णातु भवान् कृपया । भवच्छ्रीपादपद्मस्पर्शेन धन्यं जातम् अस्मद्गृहम् ।

**प्रचण्ड०** । ( स्वगतम् ) अहो किमेतत् ? सातिशय-कोमल-सरलौ कौ एतौ ? ( उच्चैः ) नाहं कामये वृथा चाटुकारित्वम् । आह्वय कमलकलिकाया मातापितरौ सत्वरम् ।

**अरिन्दमः** । कमलकलिकाया मातापितरौ ? तत् कथम् ?

**प्रचण्ड०** । किं तेन तव ? पालय ममादेशम् ।

**सुदर्शना** । मान्य महोदय ! आवां द्वौ आवयोः प्राणप्रतिमायाः कन्यकायाः कमलकलिकायाः स्नेहशील-मातापितरौ सुदर्शना अरिन्दमश्च । किं भवतः प्रयोजनम् आवाभ्याम् ?

प्रचण्ड०। ( स्वगतम् ) अहो ! एतौ द्वौ अतिसाधारणजनौ मम प्राण-मनोहारिण्या मातापितरौ ? अथवा, अलं विस्मयेन। यतः अङ्गारखनिमध्ये लसन्ति सादरं हीरकाः, लवणाब्धितले वसन्ति साग्रहं रत्नानि, पङ्कस्तूपकेन्द्रे हसन्ति सानन्दं पङ्कजानि। भवतु, इमौ मिष्टभाषणेन परितोषणीयौ। यत एतावेव मम स्वार्थसिद्धेरुपायभूतौ।

( प्रकाशम् ) मातापितरौ ! प्रणमामि।

मातापितरौ। कल्याणं भवतो भूयात्।

प्रचण्ड०। अहं प्रचण्ड-प्रतापनामधारी कुवेरराजवंशीयः धनी मानी ज्ञानी गुणी जनः। सन्ति मम वहुलक्षमुद्राः सुविशाला अनेका अट्टालिकाः असंख्यानि कुञ्जवनानि प्रभूतानि शकटानि प्रचुरा भृत्याश्च। अथवा अलं प्रत्येकनामकथनेन—किं मे न सन्ति ? किं न ? किं न ?

अरिन्दमः। सत्यम् ? भृशम् आनन्दितो जातोऽहं भवतो धन-जन-मानविषयकं वृत्तान्तं श्रुत्वा।

सुदर्शना। अहमपि। मन्ये, भवान् परसेवार्थं भवतः सुविशाल-सम्पत्ति विनियुक्तवान्। यतः, अस्मच्छास्त्रानुसारेण अर्पणेनैवार्जनस्य, वितरणेनैवाहरणस्य, दानेनैव प्राप्तेः सार्थकता। ततः सूर्यस्य सार्थकता आलोकविकीरणे, पुष्पस्य गन्धवितरणे, तटिन्याः श्यामलीकरणे। किं न एतत् सत्यम् ?

सेवैव मुख्यं व्रतमत्र लोके
यतो हि सा सर्वजनीन-वृत्तिः।
उदारतां जीवनमाहुरार्याः
सङ्कीर्णतां मृत्युमुदाहरन्ति ॥३१॥
जीर्णे कुटीरे विषवाष्प-दुष्टो
विवद्ध-वायुर्जनतापकारी।
मुक्त-प्रदेशे प्रवहन् स एव
प्रमोदहेतुः सुतरां नराणाम् ॥३२॥

आवद्ध-कुल्यादिषु पङ्किलाम्भः
स्नातुर्विरागं सुतरां विधत्ते।
विसारि-खाते प्रवहत् तदेव
स्नानेषु पानेषु च तृप्तिकृत् स्यात् ॥३३॥

प्रचण्ड०। (सक्रोधम्) न न न—कदापि न, कदापि न, कदापि न। नाहं स्वीकरोमि आत्मोत्सर्गस्य माहात्म्यम्। मूर्ख एवात्मदानं करोति नान्यः। मन्मते तु आत्मोत्सर्ग आत्महत्यारूपः, नान्यत् किञ्चित्, नान्यत् किञ्चित्।

सुदर्शना। (विस्मयान्विता) किं कथयति भवान्? अत्याश्चर्यमिदं सर्वम्।

प्रचण्ड०। (स्वगतम्) हा हतोऽस्मि! किं कृतं मया रोषवशेन? माता-पितृहृदयं मया जेतव्यम् अचिरेण। ततः प्रचेष्टे पुनरहम्।

(प्रकाशम्) आर्यौ! कृपया क्षमेथां मां भवतोरधन्यसन्तानम्। इयं मम वचनरीतिः केवलम्, न मर्मोत्था भावलहरी। जाने अहम् आद्रिये अहम् आत्मत्यागस्य महामाहात्म्यं सम्पूर्णतया।

सुदर्शना। (सानन्दम्) सुष्ठु तद् वत्स!

प्रचण्ड०। शृणुतं कृपया युवां मम शुभप्रस्तावम्। अहं भवतोः कन्यायाः पाणिप्रार्थी।

अरिन्दमः। पाणिप्रार्थी? किन्तु कथं भवान् तां ज्ञातवान्?

प्रचण्ड०। (विहस्य) को न जानाति प्रभातस्य दिगन्त-व्यापिनम् आलोकम्, कोकिलस्य दिग्विदिक्प्रसारि सङ्गीतम्, शतदलस्य सर्वावगाहि सौरभम्? भवतु, किं भवतोर्मतम् एतद्विषये?

अरिन्दमः। (चिन्तान्वितः) न जाने, न जाने अहं तत्।

सुदर्शना। अहमपि।

प्रचण्ड०। (सरोषम्) कथम्? कथं भवतोरीदृशोऽहङ्कारः? किं नाहं भवतोः कन्याया योग्यपात्रम्? कथं कथम्? अहं राजवंशीयः, भवन्तौ तु

साधारण-यक्षवंशीयौ केवलम्। ततः काऽत्र भवतोर्विप्रतिपत्तिः ? किं वा अधिकं भवन्तौ वाञ्छतः ? पात्रोचिता गुणा मयि वर्तन्ते परिपूर्णतया — रूपं धनं पदं बलं वंशः मानः मर्यादा—इत्यादयः। तथापि न भवन्तौ सन्तुष्टौ जातौ ! आश्चर्यं महदाश्चर्यं परमाश्चर्यम् !

**सुदर्शना।** सत्यं सत्यं पूर्णसत्यम्। तथापि, मान्यमहोदय ! यदि मम दोषान् न गणयति भवान् कृपया, ततोऽहं ब्रवीमि सविनयं यत् भवतः पात्रोचित-श्रेष्ठगुणस्य अस्तित्वविषये न आवां जानीवः किञ्चिन्मात्रमपि। अत एवावयोः शङ्का द्विधा वा अत्र।

**अरिन्दमः।** सत्यं सत्यं पूर्णसत्यम्।

**प्रचण्ड०।** ( सरोषम् ) क एष श्रेष्ठगुणो भवन्मते ? आश्चर्यं महदाश्चर्यं परमाश्चर्यम्। इतोऽप्यधिकः को वा गुणोऽन्यः सम्भवत्यत्र ?

**सुदर्शना।** ( दृढ़ा ) सम्भवति—अत्यावश्यकरूपेण, अवश्यम्भाविभावेन, अनिवार्यप्रकारेण सम्भवति।

**प्रचण्ड०।** ( अधैर्यः ) कथयतु भवती तत्, कथयतु कृपया अविलम्बम्।

**सुदर्शना।** तद्धि प्रेम—दाम्पत्यप्रेम, शाश्वत-निर्मल-दाम्पत्यप्रेम।

**प्रचण्ड०।** प्रेम ? हाः हाः हाः ! प्रेम ? किं नामैतत् प्रेम ? सम्पूर्णतया असारम्, सम्पूर्णतया अलीकम्, सम्पूर्णतया अगण्यं प्रेम हि सम्पूर्णतया परनिर्भरशीलम् सम्पूर्णतया धन-पद-बल-वंश-मानमर्यादापेक्षि केवलम्। नीच-निर्धन-निर्बल-शून्योदर-शून्यकोष-शून्यगृह-जनस्य कथं वा प्रेम ? हाः हाः हाः ! केवलं प्रकृति-शोभाम् आलोक्य, केवलं कोकिलकूजनम् आकर्ण्य, केवलं सुधाकर-सुधाम् आपीय, केवलं कमलगन्धम् आघ्राय, केवलं मलय-समीरम् आसेव्य च जीवनं न तृप्तं धन्यं सार्थकं वा भविष्यति—तदर्थं प्रयोजनीयम् अन्नं वस्त्रं गृहं धनं पदं बलं मानो मर्यादा च सुनिश्चितमेव। पुनः, जीवनं न तिष्ठेच्चेत् कुत्र वा प्रेम वर्तताम् ? ततः सरले महाशये ! चिन्तयतु भवती सर्वप्रथमं जीवनधारणविषयम्—तत्-पश्चादेव उदेष्यति प्रेमणः प्रश्नः।

हाः हाः प्रेम !

स्वप्नालोः स्वप्नमात्रं तत् कपोलकल्पना कवेः ।
मायाकल्पितमुत्सूत्रं माल्यं जल-दधीव च ।
तृष्णार्त-मरुभूचारि-जनस्य मृगतृष्णिका ॥३४॥
विश्वब्रह्माण्डमध्ये तु धनमेकं सनातनम् ।
सर्वाश्रयमिदं सर्वशासकं सर्वशक्तिमत् ॥३५॥
धनं ददाति मूर्खाय महापण्डितमाननाम् ।
समादरं विधत्ते च पुण्यानामिव पापिनाम् ॥३६॥
भीमतुल्यं करोत्येतत् पुमांसमतिदुर्बलम् ।
ततः कुरु धनस्यैव साधनाराधने मुहुः ॥३७॥

सुदर्शना । अत्याश्चर्यम् इदं सर्वम् ! अस्माकं चिन्ताधारा तु नेत्थम् ।

प्रचण्ड० । हाः हाः हाः ! भवत्यः प्राचीन-परित्यक्त-पथावलम्बिन्यः । ततो मा द्विधाग्रस्ता भव । मातः ! देहि सानन्दं मद्धस्ते त्वत्पुत्रिकाम्, अहं तां स्वर्ण-हीरक-रत्नसम्भारैराच्छाद्य सुखयिष्यामि सुनिश्चितमेव ।

सुदर्शना । धन्यवादः, किन्तु अस्मिन् विषये मम कन्यैव हर्ती कर्ती विधात्री । आगच्छतु सा अत्र, शृणोतु स्वकर्णाभ्यां भवतः कृपाप्रसूतं प्रस्तावम्, ततः करोतु सा स्वयं स्वस्य जीवनपथनिर्णयम् ।

प्रचण्ड० । (पुनः क्रोधान्वितः) किं न जानाति भवती यत्, मम विवाहप्रस्तावो भवत्कन्यापक्षे बहुलसम्मानसूचकः ? अहं समाजशिरोमणिः श्रेष्ठो जनः, अस्ति मम सेवादासी-लीलासङ्गिनी प्रेमसहचरीवृन्दं सततम्—न एकामपि वृतवान् अहं सहधर्मिणीपदे सानुहम् अद्यापि । इदं सम्मानन्तु भवत्याः कन्यया एव सर्वप्रथमं प्राप्तम् । तथापि—तथापि—

( सहसा प्रविशति वेगेन अरुणकिरणसहिता कमलकलिका )

कमल० । तथापि, तथापि, सा घृणाभरेण तत् ससम्मानं प्रत्याख्याति—घृणाभरेण, द्विधाशून्यभावेन, दर्पसाहायकेन ।

**प्रचण्ड०।** (सक्रोधम्) किं, किं कथयसि त्वम् असीमस्पर्धाशीले बाले! किं त्वं सहसा जाता बुद्धिहीना उन्मत्ता वा?

**कमल०।** न, भवान् जानातु किल स्पष्टतया यत् अयं मम स्थिरबुद्धि-विवेचनाप्रसूतः सिद्धान्तः, नान्यत् किञ्चित्, नान्यत् किञ्चित्। यदि भवान् न जात उन्मत्तो बद्धिविहीनो वा, तत इदमेव भवता ज्ञेयं सर्वथा सर्वदा सम्पूर्णतया च।

**सुदर्शना।** वत्से कमलकलिके! अतिथिजना हि देवतुल्याः ततस्तेषां बिन्दुमात्रापि अवमानना कदापि न करणीया—कदापि न।

**अरिन्दमः।** प्राणपुत्तलिके मम! शृणु—अयं कुवेरराजवंशीयः धनि-मानिजनः तव पाणिग्रहणेच्छुः सानुग्रहम्। ततोऽहं मन्ये यत्, यथोपयुक्त-चिन्तावलम्बनात् परमेवायं प्रस्तावः परिवर्जनीयः।

**प्रचण्ड०।** (सन्तुष्टः) इदं हि पितृतुल्य-सम्यगाचरणम्। कन्याया योग्यवरस्तु न गृहकोणेषु गृहकोणेषु, पथिपार्श्वेषु पथिपार्श्वेषु, प्राङ्गणमध्येषु प्राङ्गणमध्येषु वा मिलिष्यति ध्रुवम्। ततो न स एतादृगवहेलाभरेण परि-त्याज्यः। अत एव, अयि कोपनशीले! रोषं संहृत्य आद्योपान्तं चिन्तय पुनर्वद्ध-द्वारगृहे स्वच्छन्दं स्थित्वा एकाकिनी। अहं प्रत्यावर्तिष्ये अत्र सप्ताह-कालात् परम्। मन्ये, तदेव भविष्यति यथेष्टं त्वत्पक्षे।

**अरिन्दमः।** अतीवोत्तमः प्रस्तावोऽयम्। नयनतारके मम! गृहाणेमं सानन्दम्।

**कमल०।** (दृढा) न, कदापि न। नास्ति मम मुहूर्तमात्र-चिन्तयापि प्रयोजनम्—का वा कथा सप्ताहकालस्य। पुनरपि वदामि—अहं श्रीप्रचण्डप्रतापस्य विवाहप्रस्तावं घृणाभरेण प्रत्याख्यामि—घृणाभरेण, द्विधाशून्यभावेन दर्पसाहायकेन—न कृतज्ञताभरेण, न सन्देहाकुलचित्तेन, न विनीतभावेन—किन्तु घृणाभरेण, द्विधाशून्यभावेन, दर्पसाहायकेन।

**प्रचण्ड०।** रे रे रे······

**अरिन्दमः।** वत्से! वत्से! नैतादृशम् उद्धताचरणं त्वयि शोभते।

**सुदर्शना।** नाथ! औद्धत्यस्य का कथा अत्र? शिक्षा-दीक्षाप्राप्ता कन्यका मम स्वकल्याणविषयम् अवधारयितुं सम्पूर्णतया समर्था। ततः सा न तिरस्करणीया कदापि।

मान्यमहोदय! कृपया क्षमतां भवान् अस्मान्। अतीव साधारणजना वयम्, न मम प्राणदुहिता भवदन्तःपुरं शोभयितुं समर्था कथञ्चिदपि। ततः कृपया वरयतु अन्यां योग्यतरां कन्यकां भवान्।

**प्रचण्ड०।** (सोपहासम्) धन्यवादः। किन्तु नाहं कामये भवत्या अयाचितोपदेशवाणीं कथञ्चिदपि। अहं जाने सम्पूर्णतया—कदा कुत्र किं वा करणीयम्।

भवतु, यः स्वेच्छया सिंहशावकम् अकारणं दर्पभरेण कोपयति, कालसर्पस्य पुच्छं मृद्नाति, निद्रित-शार्दूलं दण्डेन ताडयति वा, स यथोपयुक्तं फलं प्राप्नोति सुनिश्चितमेव। तदेव घटिष्यते अत्रापि, तदेव घटिष्यते—तदा न तव रसिक-नागरोऽयं त्वां रक्षितुं शक्ष्यति—कदापि न, कदापि न, कदापि न (वेगेन प्रस्थितः)।

**अरिन्दमः।** हा धिक् हा धिक् हा धिक्! अकारणो विपत्पातः—सुनील-शारदाकाशात् सहसा प्रचण्ड-वज्रपातः, मञ्जु-कुञ्जवने सहसा कराल-कालसर्पाविर्भावः, विकच-कमलकानने सहसा मदमत्त-गजाक्रमणम्। हा धिक्, हा धिक्, हा धिक्!

**सुदर्शना।** नाथ! मा व्याकुलो भव अकारणम्। न कदापि शक्नोति असत्यं सत्यं जेतुम्, अन्धकार आलोकम् मृत्युरमृतञ्च। कदापि न, कदापि न, कदापि न।

**कमल०।** श्रद्धेय-मातापितरौ! अयं मम प्राणरक्षकः श्रील-श्रीयुक्तः अरुण-किरण-महोदयः। निस्वार्थपरः स मां नदीकवलाद् रक्षितवान् तदा।

**सुदर्शना।** वत्स! गृहाण मम शतशताशीर्वादान्।

**अरिन्दमः।** ममापि।

**सुदर्शना।** इयं मम कन्यका अस्माकं नयनानाम् एकमात्रालोकः,

अस्माकं वक्षसाम् एकमात्रपुलकः, अस्माकं प्राणानाम् एकमात्रस्पन्दनम्, अस्माकं मनसाम् एकमात्रवन्दनम्। तद्विरहितौ आवामपि न जीविष्यावो मुहूर्तमात्रमपि। ततस्त्वम् आवयोरपि प्राणरक्षकः समभावेन।

**अरुण०।** ( लज्जितः ) न न न, नेदं मम निःस्वार्थपर-कर्म, यतोऽनेन ममापि प्राणरक्षा जाता समभावेन।

**अरिन्दमः।** ( आश्चर्यान्वितः ) तत् कथम्?

**कमल०।** ( लज्जिता—जनान्तिकम् अरुणकिरणम् उद्दिश्य ) तूष्णीम्भव अरे रे दुष्टजन! त्वं सरलः सहजः अमलः अखलो जनः—एतन्मम भ्रममात्रम्, त्वं धूर्तचूड़ामणिः, कौशलिसम्राट् कुटिलरत्नञ्च।

**अरुण०।** ( सानन्दं—जनान्तिकम् ) सत्यम्! पश्य प्राणाधिके मम! मम अपूर्व-कलाकौशलानि एतद्दुष्करविषये। माता-पित्रोः प्राणप्रिय-कन्याहरणं तु न तादृश-सुकरम्। किं रत्नाकर इच्छति कदापि तस्य श्रेष्ठरत्नं दातुं लोलुप-नाविकेभ्यः? किं वनस्पतिरिच्छति कदापि तस्य श्रेष्ठफलं दातुं क्षुधार्त-पथिकेभ्यः? किं मधुमक्षिका इच्छति कदापि तस्य श्रेष्ठ-मधु दातुं तृष्णार्त-बालकेभ्यः? चिन्तय तत् जीवनसर्वस्व, चिन्तय तत्।

**कमल०।** ( सलीलम् ) अलमतिजल्पनेन। आत्मश्लाघां त्यक्त्वा यथा-कर्तव्यं कुरु प्राग्रेसरो भूत्वा।

**अरुण०।** ( प्रकाशम् ) वन्दनीय-मातापितरौ! स्वमुखेन स्वप्रेमकथां गुरुजनसम्मुखे वक्तुं लज्जे अहं भृशम्। तथापि वदामि निरुपायः अहं यत्—इयं हि कन्यका मम प्राणमनोहारिणी—तद्विरहितोऽहं न जीविष्यामि मुहूर्तमात्रम्।

**अरिन्दमः।** सत्यम्? न जाने कथं मम क्षुद्रा बाला जाता विश्व-प्राणमनोहारिणी सहसा?

**सुदर्शना।** कथं न? यदा क्षुद्रा कमलकलिका विकशति पूर्णप्रस्फुटित-कमलिनीरूपेण तदा को वा न आद्रियते तस्या अनन्त-सौन्दर्यम् अतुल-माधुर्यम् असीमैश्वर्यञ्च। को वा न स्निह्यति तस्याः अमलालोके? तस्या अनिन्द्या-नन्दे? तस्या अमेयामृते? को वा न मुग्धो भवति तस्या रुचिर-रूपेण? तस्या

रमण-रसेन ? तस्याः शोभन-सौरभेण ? तदेव संघटितम् अत्रापि। न तव कमलकलिका क्षुद्रा, मुद्रिता, शङ्किता वा साम्प्रतम्—सा विश्वोद्यानस्य केन्द्रस्थले विकशिता पूर्णगौरवेण, सर्वेषां दृष्टिम् आकृष्य, सर्वेषां प्रीतिम् आहृत्य सर्वेषां नतिम् आपद्य च।

**अरुण०।** (नतजानुः) ततो नतजानुरहं कृताञ्जलिर्याचे सविनयं भवतोः कन्यारत्नम्। यद्यपि नाहं राजवंशीयः, परन्तु राजसेवकः, तथापि कमलकलिकायाः कणामात्रकल्याणार्थम् अहं मम समग्रजीवनम् उत्स्रष्टुं प्रस्तुतः अधीरश्च वर्तिष्ये शाश्वतकालम्।

**अरिन्दमः।** उत्तिष्ठ वत्स! उत्तिष्ठ। तव विनयो हि परमसुखकरः, किन्तु अत्रापि न जाने किं कर्तव्यं मम। देवि! का तवेच्छा ?

**सुदर्शना।** ममेच्छायाः का कथा ? पूर्वमेवाहं कथितवती यत्, अत्र सा—मम कन्यकैव हर्त्री कर्त्री विधात्री—नाहं, न वा अन्यः।

यद्यस्माकं कमलकलिका अस्माकं गृहपरिवारोद्यानं त्यक्त्वा विकशितुम् इच्छति अन्य-गृहपरिवारोद्याने साम्प्रतम्, यदि सा नवम् अरुण-किरणं प्राप्य उत्तोलयति तस्या मुखं तदभिमुखं सानन्दं तदालोकधारया स्नात्वा, यदि सा तस्या रूप-रस-गन्धैः आमोदयितुम् यतेत सङ्कीर्ण-गृहकोणं तीर्त्वा विश्व-ब्रह्माण्डं सर्वम्—तदा का वा स्यात् अस्माकं विमतिः ?

**अरिन्दमः।** सत्यं सत्यं पूर्णसत्यम्। (रोदनोन्मुखः) प्राणाधिके कन्यके मम! का तवेच्छा अस्मिन् विषये ?

**कमल०।** (नतमुखीं रोदनोन्मुखी च तूष्णीं तिष्ठति)।

**सुदर्शना।** वत्स अरुणकिरण! सानन्दं गृहाण तव कमलकलिकाम्। अपेक्षते सा तवारुणकिरणस्पर्शं पूर्णप्रस्फुटीभवनार्थम्। तत्तु प्रस्फुटनं न कदापि सम्भवति अस्माकं स्नेहसम्पातेन—तत्तु तव प्रेमस्पर्शानुगामि सर्वथा। तेनैव प्रेमस्पर्शेन, तेनैव मधुरमोहन-सरस-शोभन-ललितलोभन-प्रेमस्पर्शेन तस्या मुद्रितं जीवनं भवतु पूर्णविकशितम्, तस्याः सुप्तं जीवनं भवतु पूर्णजागरितम्, तस्याः सङ्कीर्णं जीवनं भवतु पूर्णप्रसारितम्।

**अरिन्दमः।** भवतु तत्, भवतु तत्।

**कमल०।** ( रोरुद्यमाना ) परमादरभाजन-मातापितरौ! प्रणमामि वारंवारं भवच्छ्रीपादपद्मेषु। अतुलनीया खलु युवयोः करुणा।

**अरुण०।** अहमपि प्रणमामि भवन्तौ वारंवारम्। कृतकृतार्थोऽस्मि अहं भवत्कृपालाभेन। भवद्दत्तं महाधनं भवतु अद्यारभ्य मम श्रेष्ठ-गच्छित-धनम्, मम श्रेष्ठ-रक्षणवस्तु, मम श्रेष्ठसहायः।

**अरिन्दमः।** भवतु तत्, वत्स! भवतु तत्, भवतु तत्।

### दुहितृवन्दनम्

सत्यपि पुत्रे सति च कलत्रे दुहिता विधातृकरुणा।
जनक-जनन्याः सेवाधन्या नितान्त-सदया निपुणा ॥३८॥
कलयति सूक्ष्मामपि नोपेक्षां परिजनसुखसन्धाने।
स्वार्थोपेक्षा-लम्भितदीक्षा निरता विनयाधाने ॥३९॥
प्रतिपरिवारं विहितविचारं रचयति सेवामनिशम्।
रहयति खेदं विनयति भेदं दधती शुभ-शुचि वेशम ॥४०॥

[ इति तृतीय-दृश्यम् ]

—०—

## चतुर्थ-दृश्यम्

[ प्रेम्णः पूर्णता ]

स्थानम्—अरुणकिरणस्य कुञ्जम्।

समयः—पूर्णिमारात्रिः।

( ततः प्रविशत आनन्दोत्फुल्लौ कमलकलिका अरुणकिरणश्च )

**अरुण०।** अहो! मधुरिममयी इयं पूर्णिमारजनी मम अन्तरानन्दस्य बाह्यप्रतिमूर्तिरेव। निर्मल-नीलगगने हसति प्रसन्न-पूर्णचन्द्रः, दीप्त-दशदिक्षु खेलति ललित-मलयपवनः, श्यामल-शीतलकुञ्जे नृत्यति त्वरित-तरल-तटिनी, वरेण्य-वनस्पति-शाखायां गायति चारुचञ्चल-चकोरी।

अहो ! इदं हसनम्, इदं खेलनम् इदं नर्तनम् इदं गीतञ्च न प्रकृति-देव्याः, परन्तु ममैव ममैव !

अहो स्नेहमयी नित्यं नित्यमानन्ददायिनी ।
प्रकृतिर्नित्यभद्रेयं मनोमुकुररूपिणी ॥४१॥
मनसो यावती भाव-भावना वासना तथा ।
साधनाराधना सर्वा प्रकृतौ प्रतिबिम्बति ॥४२॥
हर्षेण मनसोऽस्माकं तत्र पुष्पं विकासते ।
वर्षधारा विषादेन भयेनामानिशातमः ॥४३॥
अरुणस्योदयस्तत्र जायते साहसेन नः ।
विचित्रा वत लीलेयं प्रकृतेः परिवर्तते ॥४४॥

अद्य सहसा मम प्राणप्रदीपः पूर्णप्रज्वलितः, सहसा मम मनोवीणा पूर्ण-झङ्कृता, सहसा ममं जीवन-शतदलं पूर्णप्रस्फुटितम् ।

**कमल०** । ( सलीलम् ) तत् कथं प्राणप्रिय ! तत् कथम् ?

**अरुण०** । त्वदर्थं केवलं त्वदर्थंम, मधुमयि ! केवलं त्वदर्थम् । तवैव शिखया प्रज्वलितो मम प्राणप्रदीपः, तवैव सङ्गीतेन झङ्कृता मम मनोवीणा, तवैव किरणेन प्रस्फुटितं मम जीवनशतदलम्—जानीहि तत् सुनिश्चितमेव, जानीहि तत् ।

**कमल०** । ( विहस्य ) सत्यम् ?

**अरुण०** । सत्यं सत्यं चिरसत्यं पूर्णसत्यम् ।

कमलकलिके—मम जीवनसरोवरस्य ! किं त्वं जानासि यत्—नाहम् आसं प्रेमविश्वासी इतः पूर्वम् । प्रेम हि वुद्वुदवत् अन्तःशून्यम्, शिशिरवत् क्षणस्थायि, इन्द्रधनुर्वत् सारहीनम्, स्वप्नवत् अलीकम् मायावत् मोहजनकञ्च—इयमासीन्मम वद्धमूलधारणा प्रेमविषये । हाः हाः हाः ! प्रेमपुत्तलिके मम ! अयमासीन्मम धीरनिश्चयः, मम स्थिरनिर्णयः, मम चिरनिगमः । किन्तु—

**कमल०** । ( लीलया ) किन्तु ?

**अरुण०** । ( विहस्य ) किन्तु सहसा उदिता मत्सम्मुखे काचिद् देव-वाला । सूर्योदयमात्रेणैव यथा निशान्धकारं निमेषेण विदूरितं भवति,

वर्षापातेनैव यथा दावज्वाला निमेषेण प्रशमिता भवति ; पङ्कजप्रस्फुटनेनैव यथा नगण्य-पङ्कस्तूपो निमेषेण धन्यो भवति तथा तस्याः प्रदीप्त-प्राणालोकेन निमेषेण विदूरितं मम संशयान्धकारम्, तस्याः शीतलात्मामृतेन निमेषेण प्रशमिता मम अशान्तिज्वाला ; तस्याः प्रस्फुटजीवनपद्मेन निमेषेण धन्यो मम पापपङ्कस्तूपः। हे मम नवप्राण-मनोजीवनदायिके ! न जानामि केनोपायेन मम मनोभावं त्वां विज्ञापयितुं शक्ष्यामि सम्पूर्णतया। यतः—

सामञ्जस्यविधानं हि दुष्करं भाव-भाषयोः।
मनोनिष्ठ-शब्दनिष्ठ-तयात्यन्त-विभिन्नयोः ॥४५॥
क्व विशालो गभीरश्च भावो मानसगोचरः।
क्व वा शब्दगता भाषा वहिष्ठा क्षीणजीवना ॥४६॥
खद्योतः किं निशानाथं प्रकाशयितुमर्हति ?
पल्वलः किमु शक्नोति व्यक्तीकर्तुं महार्णवम् ॥४७॥

कमल०। (विहस्य) हे चतुर-चटुल-चाटुकार ! न शक्नोषि त्वं केवलं मिष्टमधुरवाक्यैर्मां तोषयितुम्। नाहं तादृशी अमला अखला अवला वालिका ! अहं प्रखरबुद्धिवाहिता प्रवरकौशल-कलिता प्रचुर-शक्तिसहिता अनन्ताचिन्त्य-विभूतिधारिणी दुर्दमनीया दुर्धर्षणीया दुर्वहनीया भीषणा ललना। हाः हाः हाः ! ततो देहि, देहि मे तव प्रेम्णः प्रमाणम्।

अरुण०। प्रमाणम् ? हाः हाः हाः ! किं प्रमाणं त्वं वाञ्छसि मम प्रचण्डचामुण्डे !

कमल०। प्रमाणम् ? प्रमाणम् ? (इतस्ततोऽवलोक्य) किं नु एतत् ? किं दूरे विराजते पद्मवनमेकम् ?

अरुण०। सत्यम्। किन्तु कथं ज्ञातं तत् त्वया वहुदूरतः ?

कमल०। (विहस्य) धिक् मूढ ! किं न जिघ्रसि पद्मानां मधुगन्धम् ? पुनः, किं न जानासि मम सरल-सहज-वालक ! यत् सहस्रदलस्य गन्धः सहस्रयोजनव्यापी भवितुमर्हति सर्वदा ? कमलकलिकाहम्—ततः शिक्षस्व कमलसमाजस्य गोपनरहस्यं मत्तः। हाः हाः हाः !

**अरुण०।** हाः हाः हाः ! ततः कमलराशि मम ! का तवेच्छा कमलवनविषये ?

**कमल०।** ममेच्छा ? ( चिन्तामभिनीय ) भवतु, आनय कमलराज्यस्य कमलिनीराज्ञीं सर्वश्रेष्ठकमलिनीं मदर्थम्। अहं कमलकलिकां तां मस्तके धारयिष्यामि सश्रद्धम्।

**अरुण०।** ( नतजानुः ) कमलराशि मम ! क्षमस्व मां, यतः न शक्नोम्यहं तव शुभेच्छां पूरयितुम्।

**कमल०।** उत्तिष्ठ उत्तिष्ठ जीवनवल्लभ मम ! किन्तु तत् कथम् ? कथय मां सर्वं वृत्तान्तम्।

**अरुण०।** शृणु। "मायामदिरा"नामधारि पद्मवनं श्रीलश्रीयुक्तकुवेरराजस्य विशेषप्रियसम्पत्तिः। अहन्तु श्रीलश्रीयुक्तनृपतिमहोदयस्य विशेषप्रियपात्रम्। न जाने अहं कथम्।

**कमल०।** अहं जाने तत्।

**अरुण०।** ( लीलया ) रे रे दुष्टे ! न जनय बाधां मम वाग्विरचने। शृणु, ततोऽहं श्रीलश्रीयुक्त-कुवेरराजेन विशेषेण नियुक्तः इदं पद्मवनं रक्षयितुम्। विशेषतः प्रतिपूर्णिमानिशीथे अमल-कोमल-शीतल-ज्योत्स्नापायिन्यो याः कमलकलिकास्ताः प्रभाते अरुणकिरणसम्पातेन विशेषरूपरस-गन्धशालिरूपेण विकशन्ति ध्रुवम्। तादृशानि कमलानि श्रीलश्रीयुक्त-कुवेर-महिषीमहोदयाया विशेषप्रियाणि—तादृश-कमलनिर्मितमाल्यैः सर्वाङ्गाणि भूषयित्वा सा कन्दर्पदेवाय अपि तादृशकमलार्घ्याणि ददाति प्रतिमासम् एकवारम्—इत्यस्याः शाश्वती रीतिः।

**कमल०।** ( सकरतालम् ) अत्युत्तमम् इदं सर्वम्। अहो ! मनसा पश्यामि पूतपूर्णिमाप्रसन्नरजन्यां रुचिर-रजतमथितमुद्रित-कमलवनस्य शान्तस्निग्ध-शुचिशुभ्र-शोभाम्, ततः परं तरुण-तपनोज्ज्वल-प्रभाते कनककिरणनिर्झरनिःस्नात-विकशित-कमलवनस्य ललित-लसित-लोहित-लुलित-लीलाम्। अहो आनन्दः !

समागमः सोम-सहस्रभान्वोः
क्वचिन्न केनापि च दृष्टपूर्वः ।
परं स मायामन्दिरेऽब्जषण्डे
मयाऽनुमेयः फलदर्शनेन ॥४८॥
यतोऽत्र पद्मेषु विराजते रवे-
रुत्तप्त-तेजो युगपत् सुतीक्ष्णता ।
सुस्निग्धता शीतलता च कम्रता
गुणाः सुधांशोरपि वर्तते समम् ॥४९॥
विरुद्ध-गुणसम्बन्धादत्रत्य-कमलानि हि ।
कमलान्तरतः सन्ति श्रीमन्ति भुवनत्रये ॥५०॥

(सहसा चञ्चला) आगच्छ आगच्छ प्राणाधिक! गच्छाव आवां "मायामदिर"-पद्मवनस्य सन्निकटे—सहसा व्याकुलं जातं मे मनस्तद्दर्शनार्थम्, भृशं व्याकुलं जातम्—न जाने कथम्। ततश्चल चल त्वरितं तत्र।

**अरुण०**। यत् त्वमिच्छसि।

**कमल०**। किन्तु, न त्वं तत्र प्रहरिरूपेण आसीः एतावत्कालम्—किं नैतद् विशेषविपज्जनकम्।

**अरुण०**। न न, मा चिन्ताकुला भव। पद्मवनस्य भीषण-शत्रु हस्तियूथम्। किन्तु हस्तिनः सर्वे अस्मिन् शान्ते शीतले निशीथे निद्रामग्ना निश्चितम्। ततस्त्वमपि निश्चिन्ता भव प्राणप्रिये।

**कमल०**। बाढम् (प्रस्थितौ)।

—०—

## पटपरिवर्तनम्

**स्थानम्**—"मायामदिरा" पद्मवनम्।

**समयः**—पूर्णिमारात्रिः।

( ततः प्रविशति प्रतिहिंसापरायणः प्रचण्डप्रतापः )

**प्रचण्ड०।** हाः हाः हाः ! कुत्र गतोऽस्य "मायामदिरा" पद्मवनस्य विशेषरक्षकः श्रीलश्रीयुक्तः अरुणकिरणमहोदयः ? हाः हाः हाः ? मन्ये गतः स तत्प्रेयसीसकाशे प्रेमनिवेदनार्थम् अस्मिन् सुन्दरे मधुरे निशीथे। हाः हाः हाः ! वाढ़म् वाढ़म् वाढ़म् ! किं न स्मरति कालसर्पम् ? हाः हाः हाः ! तस्योद्यता फणा ? तस्य कराल-गरलम् ? तस्य विषाक्त-निश्वासाश्च नावहेलनीयानि इति ?

( वहिर्द्दष्ट्वा वंशीध्वनिञ्च कृत्वा )

आगच्छत, आगच्छत, आगच्छत—मम परमादरभाजन-रजतधवल-यूथानि—आच्छत आगच्छत त्वरितम्। क्षुधापिपासार्तानि हि यूयम्—तत आगच्छत, आगच्छत आगच्छत अत्र सानन्दम् ( निष्क्रान्तः )।

( ततः प्रविशन्ति मत्त-हस्तियूथानि पद्मवने—मुहूर्तमध्ये संघटितश्च प्रलयव्यापारः। )

( ततः प्रविशतः तरुणतपनः ललितलतिका चोभयपार्श्वतः )

**तरुण०।** हा धिक् हा धिक् हा धिक् ! सर्वनाशः समुत्पन्नः, सर्वनाशः समुत्पन्नः, सर्वनाशः समुत्पन्नः ! पद्मवने प्रविष्टानि मत्त-हस्तियूथानि, मुहूर्तमध्ये च संघटितः प्रलयव्यापारः—जातं सर्वं विनष्टम्। हा हतोऽस्मि मन्दभाग्यः।

**ललित०।** वन्धो ! किं करोमि अहं किं करोमि ! पश्य पश्य—दुर्दान्त-हस्तिभिः सकल-सरस-सजल-कमलकलिका जाता निमेषेण चर्विताः, सकल-श्यामल-शीतल-कमलपत्राणि दलितानि, सकल-स्वच्छ-स्निग्ध-सलिलं कर्दमाक्तम् ! अहो कष्टम् ! अहो दौर्भाग्यम् !

प्रचण्ड० । (नेपथ्ये) हाः हाः हाः !

ललित० । (सभयम्) को नु एषः ? कस्येदृशं पैशाच-हास्यम् !

तरुण० । किं न त्वं जानासि तम् ? स श्रीलश्रीयुक्त-कुवेर-राजवंशीयो भीषणचरित्रः प्रचण्डप्रताप-महोदयः । मन्ये, इदं श्वेतहस्तियूथं तस्यैवाज्ञावहम् ।

ललित० । सत्यं सत्यं पूर्णसत्यम् । सर्वं एव जानन्ति किल यत्, स एवारुणकिरणस्य भीषणतमः शत्रुः । ततः, अरुणकिरणस्य मुहूर्तमात्र-घटिताया अनवधानतायाः सुयोगं गृहीत्वा सः—सः—सः—पिशाच एव इमं सर्वनाशं कृतवान् । हा हतास्मि ! हा हतास्मि !

तरुण० । प्राणसख, प्राणसख ! अरुणकिरण ! कुत्र त्वम्, कुत्र त्वम् ! आगच्छ आगच्छात्र त्वरितम् । सर्वनाशः समुत्पन्नः । हा धिक् हा धिक् !

ललित० । प्राणसखि ! प्राणसखि ! कमलकलिके ! कुत्र त्वं कुत्र त्वम् ? आगच्छागच्छ अत्र त्वरितम् । सर्वनाशः समुत्पन्नः । हा धिक्, हा धिक् !

(ततः प्रविशतः अरुणकिरणः कमलकलिका च सवेगम् उच्छ्वसन्तौ)

अरुण० । किं किं संघटितम् ?

कमल० । किम् ? किं संघटितम् ?

अरुण० । (दृष्ट्वा) अविश्वास्यम् इदं सर्वम् । कुत्र गतं मम "मायामदिरा" पद्मवनम् ? कुत्र कुत्र कुत्र ? विराजते तत्स्थले केवलं दलित-मथित-कर्दमाक्तो जलाशय एकः । हा धिक् हा धिक् हा धिक् ! कुत्र गता मम प्राणप्रियाः कमलकलिकाः ? मम स्वहस्तरोपिताः स्वहस्तलालिताः स्वहस्तवर्धिताः प्राणाधिकाः कमलनालाः ? कुत्र कुत्र कुत्र ? (रोदिति) ।

प्रचण्ड० । (नेपथ्ये उच्चैः) हाः हाः हाः ! गमिष्यति इयमिव तव मानुषी कमलकलिकापि सत्वरम् । हाः हाः हाः !

कमल० । देव ! मा व्याकुलो भव । धैर्यं धारय । शत्रुजननिकटे दुर्बलता न कप्रटनीया ।

प्रचण्ड० । हाः हाः हा !

अरुण० । सत्यम् । किन्तु प्राणप्रतिमे ! मम किं संघटिष्यते परेद्युः प्रभाते ? यदि श्रीलश्रीयुक्ता कुवेरमहिषी तस्याः पद्मनिर्मित-पूजाभूषणानि पूजामाल्यार्घ्याणि च न प्राप्नुयाद् यथासमयं—तदा—? ।

( सहसा आविर्भवति प्रचण्डप्रतापः )

प्रचण्ड० । तदा ? हाः हाः हाः ! तदा श्रीलश्रीयुक्त-कुवेरराजाधिराजेन मम प्राणप्रतिम-सख-श्रीलश्रीयुक्तारुणकिरणमहोदयाय दास्यति स्वराज-सिंहासनम् । हाः हाः हाः ! ( निष्क्रान्त उच्चैर्हसन् ) ।

कमल० । मा भैषीः । प्राणप्रिय मम ! अहं यास्यामि राजसभायां प्रत्यूषे सर्वं वृत्तान्तं श्रीराजसकाशे निवेदयितुं सविनयम् । दोषाः सर्वे ममैव—न तव, ततोऽहमेव शास्तियोग्या न त्वम् । किं न सत्यमेतत् ?

( पुनराविर्भवति प्रचण्डप्रतापः )

प्रचण्ड० । हाः हाः हाः ! यदि कमलकलिका निर्लज्जावत् अरुणकिरणं न प्रालोभयिष्यत् तदायं विपत्पातो नाघटिष्यत । ततो दोषाः सर्वे निश्चितं तस्या एव । हाः हाः हाः !

अरुण० । रे रे रे—

कमल० । विरम, विरम नाथ ! पथिकुक्कुरस्य चीत्कारो नावधानयोग्यः ।

प्रचण्ड० । रे रे स्पर्धाशीले ललने ! अद्यापि तवोच्चमस्तकं न धूलौ विलुण्ठितम् ! घटिष्यते तत् अतिशीघ्रमेव---अतिशीघ्रमेव (वेगेन प्रस्थितः) ।

ललित० । प्राणप्रतिमे मम ! आगच्छ मया सह विश्रामार्थम् । रात्रिर्गभीरा जाता । यद् भविष्यति तद् भविष्यति । मा चिन्ताकुला भव ।

कमल० । प्राणसखि मम ! चिन्तायाः का कथा ! इष्टदेवी मम सहायभूता सर्वदा सर्वथा च । धर्मस्य जयः सुनिश्चितः ।

( धर्मवन्दना )

कलयतु जनगणहृदयमनुक्षणमयमतिसुखकृद्धर्मः ।
यदनुध्यानान्निखिलविगानाल्लभते सततं शर्म ॥५१॥

सुखमिति मत्वा विनयं हत्वा विहितं यदिह हि कर्म।
कृत-परहिंसं सततनृशंसं दहति तदखिलं चर्म ॥५२॥
न हि परलोके कमपि विलोके सुखयितुमखिलं मर्म।
न सुहृदजयं न च सुतशौर्यं न पुनरुपार्जित-भर्म ॥५३॥
धर्माचारस्त्रिभुवनसारः प्रचरत तस्य हि मार्गे।
वाञ्छसि हृदि यदि सुखदं निरवधि वासं सुचिरं स्वर्गे ॥५४॥

[ इति चतुर्थ-दृश्यम् ]

—o—

## पञ्चम-दृश्यम्

[ निर्वासनम् ]

स्थानम्—कुवेरराजसभा।

समयः—प्रभातम्।

( प्रविशति गायन् वैतालिकः )

( कुवेरवन्दना )

शङ्कर-वर-किङ्कर-नरवाहन-परदेवः।
भक्तिविजित-शक्तिसहित-शम्भु-सततसेवः ॥५५॥
पुष्पकचर-दण्डकवर-मण्डिततर-बाहुः।
अलकापुर-शासकवर-शत्रु-मिहिर-राहुः ॥५६॥
नित्योच्छ्रय-वैरिनिचय-लब्धविजयदक्षः।
भर्जित-रिपुरूर्जित-वपुरच्छ-कशिपुतृप्तः ॥५७॥

( प्रस्थितः )

( ततः प्रविशत आसनस्थः कुवेरस्तत्पत्नी च )

( अलकावन्दना )

किन्नरपुरमुन्नततरमर्जित-वर-वित्तम्।
साम्यविधुर-गीतिमधुरमुत्सव-चिरमत्तम् ॥५८॥

उपवनभुवमृच्छति नव-युवतिः कुवलाक्षी ।
काञ्चनमय-रेणुनिचय-कीर्णसिचयलक्ष्मीः ॥५९॥
पुष्पितवन-निर्जित-घन-नन्दन-वनकान्ति ।
साम्यरहित-यौवतशत-घटित-सततशान्ति ॥६०॥

कुवेरः । ( चतुर्दिक्षु गर्वोद्धतां दृष्टिं निक्षिप्य )

अहो ! अतुलनीया खल्वियं यक्षराजधानी अलकापुरी ! अस्याः पश्चाद्देशे लसति "तुषारमौलि"नामधेया सतत-तुषारशुभ्रा सततोन्नतमस्तका सतत-स्फीतवक्षाः सततसुदृढ़पदा पर्वतमाला । अस्याः सम्मुखदेशे हसति "माया-मरीचिका" नामधेया सततशष्पश्यामला सततविस्तृताञ्चला सततकोमलानना सततहास्यमुखरा वनस्थली ! अस्या मध्यदेशे वहति "नूपुरनिक्वणा" नामधेया सततसङ्गीतमुखरा सततनर्तनप्रखरा सततखेलनप्रवरा नदी ।

अहो ! कमन-काननशोभिता रमण-रचन-लोभिता तरल-तरङ्गक्षोभिता प्रसन्नप्रसून-भरिता मम जननी अलकापुरी । एतस्या मनोमोहिन्या नगर्या राजा भूत्वा अहमपि धन्यातिधन्यः ।

कुवेरपत्नी । सुनिश्चितमेव । किन्तु महाराज ! न जानाति किल भवान् यत् अस्माकं सकल-सुखशान्ति-सिद्धि-ऋद्धि-वृद्धि-समृद्धिलाभस्य मूलकारणम् एकमेव श्रीलश्रीयुक्त-मदनदेवस्य पूजा । स ह्यत्र अलकापुरीमध्ये विशेषपूजितः सर्वदा—यतः प्रेम हि अस्माकं मूलमन्त्रः । वयं सर्वे बद्धाः प्रेमपाशेन । प्रेमैव ह्यस्माकम् आलोकः, अस्माकं वायुः अस्माकं जलम् अस्माकं फलम्, अस्माकं सर्वम् अस्माकं सर्वस्वम्, ततः प्रेमदेवता तु अस्माकं नयनमणिः, अस्माकं शिरोभूषणम्, अस्माकम् अङ्गरागः, अस्माकं प्राण-सौन्दर्यम्, अस्माकं मनोमाधुर्यम् अस्माकम् आत्मैश्वर्यञ्च । अत एव कन्दर्प-देवोऽस्माकं नित्यपूज्यः, पूर्णपूज्यः विशेषपूज्यो देवः ।

( मदनवन्दना )

स-सुरासुर-जीवनिकर-मानसहर-चेष्टः ।
त्वमसि मदन ! शान्तिसदन-कामिकदनतुष्टः ॥६१॥

रचयसि नरममरेश्वरमुज्झित-वर-चीरम् ।
कायविकलमतिदुर्बल-चित्तमतुल-वीरम् ॥६२॥
अलकापुरमेतदमर-धाम-रुचिर-शोभम् ।
आश्रय चिर-पुष्पनिकर-जनितान्तर-लोभम् ॥६३॥
कमल-रचितमेतदुचित-वारि-निचितमर्घ्यम् ।
स्वीकुरु तव मूर्धनि नव-भक्तिविभव-वर्गम् ॥६४॥

**कुवेरः ।** सत्यम्, महाराज्ञि ! तव प्रज्ञाप्रसूतानि वचनानि तु परमादर-भाजनानि निःसन्देहम् । भवतु, अद्य तव विशेष-मदनपूजा दिवसः पुनरागतो मासादनन्तरम् ।

**राज्ञी ।** ( सानन्दम् ) महाराज ! अद्य मम महानन्ददिवसः । यतो मम प्राणप्रिय-"मायामदिरा" सरोवरस्थ-पद्मानि पूर्वरात्रौ पूर्णिमा-सुधासागरे स्नात्वा अद्य प्रत्यूषे प्रथमारुणकिरणसम्पातेन विशेषरूप-गन्ध-मधुमण्डितरूपेण पूर्णप्रस्फुटितानि जातानि निःसन्देहम् । तादृशानि पद्मान्येवाहं श्रील-श्रीयुक्त-कन्दर्पदेवस्य श्रीचरणारविन्दतले अर्घ्यरूपेण अर्पयिष्याम्यचिरेण । तदुपरि अहं ज्योत्स्नाशीतल-सजल-सरस-सजीव-सतेजः-पद्मपत्रैरुत्तरीयं रचयित्वा मम इष्टदेवं मम लीलाचतुर-प्रीतिमधुर-मदनदेवं तेन समावृत्य, तरुण-तरल-पद्मनालतन्तुभिः बध्नामि तं सुदृढं सानन्दं चाद्य । कुत्र वा स पलायिष्यते—चपलश्चञ्चलश्चतुरश्चित्तहरः सः ? कुत्र, कुत्र ?—मम पद्मार्घ्यं हित्वा मम पद्मोत्तरीयं भित्त्वा मम पद्मनालतन्तुं छित्त्वा ?

वस्तुतो न इमानि साधारण-पद्मानि, इमानि सूर्य-चन्द्रोभयकिरण-स्नातानि, ततस्तेषु विद्यन्ते सगौरवं सूर्यस्योज्ज्वलता, तथा चन्द्रस्य स्निग्धता ; सूर्यस्य प्रखरता, तथा चन्द्रस्य पेलवता ; सूर्यस्य तेजोमयता, तथा चन्द्रस्य कोमलता च । सर्वा इमाः परस्परं मिलित्वा निर्मितवत्य इमानि अतुल-नीयानि पद्मानि ।

**कुवेरः ।** सत्यं नु अभिनवानि तव पद्मानि । तैरर्चितः श्रीमदनदेवो निश्चितम् अलकापुरीं विशेषरूपेणाद्रियते सर्वदा सर्वथा च ।

राज्ञी। (उद्विग्ना) किन्तु कथं चिरायते अस्माकं प्राणप्रियः अरुणकिरणः? स एव मम पद्मरक्षणार्थं विशेषादरेण नियुक्तः। कुत्र सः? कथं न स आनयति मदर्थं पद्मसम्भारम्? शुभसमयो विगतप्रायः। ततः किं करोमि, किं करोमि मन्दभाग्याहम्?

कुवेरः। देवि! मा उद्विग्ना भव। अतीव कर्तव्यज्ञानसम्पन्नः कठोरपरिश्रमकारकः, निःस्वार्थकर्मरतश्चायम् अरुणकिरणस्तव विशेषसेवकः। ततः स सुनिश्चितमेव त्वदभिलषितं पूजासामग्रीजातम् अत्रानेष्यति सत्वरम्।

(सहसा प्रविशति आर्तनादपरः लम्फझम्परतः प्रचण्डप्रतापः)

प्रचण्ड०। महाराज! महाराज्ञि! सर्वनाशः सर्वनाशः, भीषणविपत्पातः, भीषणविपत्पातः; प्रचण्डप्रलयः प्रचण्डप्रलयः!

कुवेरः। किं, किं, किं संघटितम्? प्रचण्डप्रताप! कथं त्वम् इत्थम् आचरसि मत्तवत्?

राज्ञी। वत्स प्रचण्डप्रताप! किं त्वं सहसा पिशाचग्रस्तो जातः? अन्यथा कथम् उच्चैर्नदसि, उत्तुङ्गं च नृत्यसि इत्थम्?

प्रचण्ड०। मातः! क्षमतां मां कृपया भवती। किन्तु सत्यमेवाहं मत्तो जातः पिशाचग्रस्तो वा। यतोऽस्माकं प्राणमनोजीवनस्वरूपं "मायामदिरा" पद्मवनं ध्वस्तीकृतं मदमत्त-श्वेतहस्तियूथेन पूर्वेद्युः पूर्णिमानिशीथे।

कुवेरः। किम्? किं कथयसि त्वम्? अविश्वास्यम् इदं सर्वम्। "मायामदिरा" पद्मवनरक्षार्थं मया नियुक्तो विशेषविश्वस्तो विशेषकर्मकुशलः विशेषकर्तव्यपरायणश्च अरुणकिरणः। ततः कथमिदं सम्भवति?

राज्ञी। (रोदनपरा) यातु तत्, यातु तत्। किन्तु प्रचण्डप्रताप! अपि सत्यम् एतत्? सत्यं नु श्रीकन्दर्पपदे निवेदनीयानि पूर्णिमा-ज्योत्स्नास्नातानि पद्मानि सर्वाणि विनष्टानि?

प्रचण्ड०। सर्वाणि विनष्टानि।

राज्ञी। सर्वाणि? सर्वाणि?

**प्रचण्ड०।** सर्वाणि। नैकमप्यवशिष्टम्।

**राज्ञी।** हा हतास्मि! हा हतास्मि! अस्मिन् मासे श्रीमदनदेवस्य पूजा मम विनष्टा जाता। अहो! किं करोमि, किं करोमि मन्दभाग्याहम्? ( रोदिति )

**कुवेरः।** ( सक्रोधम् ) कुत्राय दुष्ट-नष्टजनोऽरुणकिरणः? मुहूर्तेन तं पदतलेन पिष्टं करिष्यामि। असीमा खलु तस्य स्पर्धा, अनन्तं च दुःसाहसम्। प्रवलप्रतापान्वितः कुवेरराजोऽहम, को मया स्पर्धितुं समुत्सहते? ममादेशं लङ्घितुं वा? अरुणकिरणो मम विशेषप्रियपात्रम्। तथापि कर्तव्यपालन-विषये प्रियाप्रियभेदो नास्ति, द्रक्ष्यति स तदचिरेण, द्रक्ष्यति स तद् अचिरेण।

( ततः प्रविशतः अरुणकिरणः कमलकलिका च )

**अरुण०।** ( नतजानुः कृताञ्जलिः ) महाराज! महाराज्ञि! क्षमाप्रार्थी अहं भवच्छ्रीपादपद्मेषु। अमार्जनीयः खलु ममापराधः। तथापि—

**कमल०।** तथापि अहं भवतोः करुणां याचे। सर्वे दोषा ममैव, न मम पतिदेवतायाः। ततोऽहमेव शास्तियोग्या, न सः।

**प्रचण्ड०।** हाः हाः हाः! पतिव्रताशिरोमणिरत्र आविर्भूताद्य परम-गौरवेण। हाः हाः हाः।

**कुवेरः।** प्रचण्डप्रताप! तूष्णीं भव। अरुणकिरण! त्वयि विद्यमाने अस्माकं प्राणप्रतिम-"मायामदिरा" पद्मवनस्य विशेषरक्षकरूपेण, कथं मदमत्त-श्वेतहस्तियूथेन तत् कृतं विनष्टं सहसा?

**अरुण०।** ( नतमुखस्तिष्ठति लज्जितः )।

**कुवेरः।** कथं त्वं तूष्णीं तिष्ठसि? वाञ्छाम्यहं सर्वं वृत्तान्तं श्रोतुं त्वन्मुखात्।

**अरुण०।** ( पूर्ववत्तिष्ठति )।

**कुवेरः।** ( सक्रोधम् ) किं संघटितम्? कथं विमुखस्त्वं मम प्रश्न-स्योत्तरदाने? असीमा खलु तव स्पर्धा?

**प्रचण्ड०।** हाः हाः हाः! राजाधिराज! कथं वा भवान् ज्ञास्यति अतीव लज्जाजनकम् इमं वृत्तान्तम्?

**कुवेरः ।** लज्जाजनकम् ? तत् कथम् ?

**प्रचण्ड० ।** किं न जानाति भवान् यत् सोऽहर्निशं यापयति नवोढ़पत्नी-कमलकलिकायाः मुखचन्द्रं दृष्ट्वा दृष्ट्वा केवलम् ।

**पूर्वेंदुः** पूर्णिमानिशीथेऽपि स कमलकलिकया सह प्रेमलीलोन्मत्तो भूत्वा "मायामदिरा" पद्मवनं यथायथं न रक्षितवान् । ततोऽयं विपत्पातः ।

**कुवेरः ।** (सरोषम्) धिक् धिक् ! किं सत्यमेतत् अरुणकिरण !

**कमल० ।** सत्यं महाराज सत्यमेतत् । किन्तु तदर्थं दोषिणी अहमेव, न सः । ततः शास्तिप्रार्थिनी अहं भवच्छ्रीपादपद्मेषु । कर्तव्यकर्मावहेलनन्तु अमार्जनीयपापम्—तदर्थं विशेषेण दण्डनीया अहम् ।

**कुवेरः ।** अरे रे छलकलानिपुणे ! तव कुटिल-कृत्रिम-वचनैर्न मां मोहयितुं समर्था त्वम् । ततो विरम तव व्यर्थप्रचेष्टायाः । अरुणकिरण ! नेच्छाम्यहं तव मुखरवनितया सह वाक्यालापं कर्तुम्, न सा मम कथोपकथन-योग्यापि । ततः कथय—यत् त्वम् इच्छसि स्वयम् ।

**अरुण० ।** महाराज ! नास्ति वक्तव्यं मम किञ्चिदपि । अहं ममाप-राधं स्वीकरोमि । कमलकलिकाया नास्ति कश्चिदपि दोषः, अत्र दोषा ममैव सर्वे । ततो महाराज ! यथायोग्य-शास्तिदानेन मां धन्यीकरोतु कृपया । एतदेव मम दीनहीन-वक्तव्यं, मम दीनहीनप्रार्थना भवच्छ्रीपादपद्मतले ।

**प्रचण्ड० ।** हाः हाः हाः ! आदर्शस्थानीयौ खल्वेतौ दम्पती एकोऽन्यस्य दोषान् स्कन्धं नयति । हाः हाः हाः ! नेदं स्वर्गीयं दृश्यं दृश्यते कदाचिदपि । हाः हाः हाः !

**कुवेरः ।** प्रचण्डप्रताप ! तूष्णीम्भव । महाराज्ञि ! किं तव मतम् एतद्विषये ? त्वमेव हि सर्वापेक्षया दुःखक्लिष्टा अस्मिन् विषये । ततस्तवैव विधानं शिरोधार्यम् अत्र ।

**राज्ञी ।** महाराज ! नवविवाहित-दम्पती जगत्यभिनवौ एव राजेते । प्रेम्णः प्रकृष्टप्रकाशरूपेण तौ विश्वसमक्षं चिरदण्डायमानौ । ततः प्रेमावेगेण यदि तौ मुहूर्तमात्रम् अन्य-कर्तव्यकर्माणि विस्मरतः, तथापि तौ सम्पूर्णतया

क्षमार्हौ। महाराज ! क्षमस्व मां—किन्तु किं विस्मृतं त्वया तव स्वीय-प्रथम-दाम्पत्य-जीवनम् ? अहो—प्रथमप्रेमृणस्ते कनककिरणकलित-ललित-लीलालसित-दिव्यदीप्तिदलित-दिवसाः ! का वा तेषां तुलना विश्वभुवने ?

अहन्तु जानामि—

सर्वविस्मारकः प्रेमा भावावेगो महत्तरः।
कठोरमपि कर्तव्यं क्वचिद्विस्मारयत्ययम् ॥६५॥
पश्य कम्पान्विता पृथ्वी करोति कुक्षिसात् क्षणात्।
गृहोद्यानादिकं सर्वं यत् सा हृदि पुराऽकरोत् ॥६६॥
वायुर्वहन् महावेगस्तुङ्ग-तुङ्गं वनस्पतिम्।
करोति धूलिसात्, पूर्वं यं स धीरमनर्तयत् ॥६७॥
जलोच्छ्वासान्नदी क्षेत्रमुर्वरं प्लावयत्यपि।
यत् पूर्वमकरोत् सैव शस्यश्यामलमम्भसा ॥६८॥
सुश्रृङ्खलः सुखाधायी प्रेमापि प्रबलीभवन्।
कर्तव्यकठिनं कुर्याज् जीवनं चेद् विश्रृङ्खलम्।
नायमत्यन्त-दोषेण ग्रहीतव्यो व्यतिक्रमः ॥६९॥

ततो नाथ ! क्षमस्व इमं नवप्रेमोन्मत्तं जनम्। मम कन्दर्पदेवस्य पूजा भवत्वद्य तस्यैव प्रेमपद्मेन।

**कमल०।** मातर्मातः ! असीमा खलु भवत्याः करुणा। न जाने भवच्छ्रीपादपद्मे मम कृतज्ञताप्रकाशनस्य भाषाम्।

**कुवेरः।** न जाने किं करणीयमत्र।

**राज्ञी।** पुनरपि वदामि यत्—प्रेम हि सर्वदा समादरणयोग्यम्। ततोऽयं प्रथमप्रेमोन्मत्तजनः सम्पूर्णरूपेण क्षमार्हः।

**प्रचण्ड०।** न न न, नायं दुर्वृत्तः कर्तव्यविमुखो जनः क्षमार्हः। प्रथम-प्रेम तूदेति प्रत्येकजनस्य जीवने स्वाभाविक-नियमानुसारेणैव। ततो यदि प्रत्येकजनः तत्कारणादेव क्षमार्हो भवति, ततः कथं चलिष्यति जगत् जीवनं वा ?

**कुवेरः।** सत्यं सत्यं पूर्णसत्यम्। राजाहं न क्षन्तुमर्हामि कर्तव्य-कर्मावहेलनम्। विशेषतः, अरुणकिरणो मम विशेष-प्रियपात्रम्। ततो यद्यहं तस्येदृश-गुरुतरापराधमपि क्षमे, तदा मम प्रजापुञ्जो वा किं वदिष्यति ? ततः, प्रचण्डप्रताप ! कथय, का तस्य योग्या शास्तिस्त्वदभिमता ?

**प्रचण्ड०।** (सोल्लासम्) निर्वासनम्—एकदिनस्य कर्तव्य-कर्मावहेलनार्थम् अलकापुरीत एकवत्सरनिर्वासनम्।

**अरुण०।** (सोद्वेगम्) निर्वासनम् ? महाराज ! प्राणप्रतिमा ममेयम् अलकापुरी। ततः, अलकापुरीतो निर्वासनं मम जीवनहानितुल्यम्। राजाधिराज ! अत्र स्थित्वा कठिनतमां शास्तिमहं नतमस्तकेन गृह्णामि। किन्तु निर्वासनम ? उच्चारणमात्रेण स्तब्धीभूतं मम हृत्स्पन्दनं निश्चलः शोणितप्रवाहः रुद्धाश्च निश्वासप्रश्वासाः।—निर्वासनम् अलकापुरीतो निर्वासनम् ?

**प्रचण्ड०।** (अनुकृत्य) निर्वासनम् ! अलकापुरीतो निर्वासनम् ! हाः हाः हाः ! न न, कमलकलिकातो निर्वासनम्—एषैव सारकथा, प्रकृत-कथा—कमलकलिकातो निर्वासनम् ! हाः हाः हाः !

**राज्ञी।** प्रचण्डप्रताप ! तूष्णीं भव। पवित्र-प्रेम हि नोपहासवस्तु। महाराज ! पुनरपि वदामि—अयम् अनुतप्तः प्रेममत्तो जनः क्षमार्हः सम्पूर्णतया। यथा तथा वा भवतु, नायं नवविवाहितो जनो निर्वासनयोग्यः अलकापुरीतः। क्षमार्हः सः।

**कुवेरः।** न न न—करुणाकोमले देवि ! न तत् सम्भवपरमस्ति। ततः शृणु अरुणकिरण ! शृणु मम दण्डादेशम्—गुरुतरापराधहेतोस्त्वम् अलकापुरीतो निर्वासित एकवत्सरार्थम्।

**कमल०।** अहो मम प्रियतमो निर्वासितः ! निर्वासितः ! निर्वासितः। कमलकलिकापि निर्वासिता सकलालोकात्, सकलानन्दात्, सकलामृताच्च। अतः परं सापि विराजिष्यते निर्वासिता सकलजीवनात्, सकलसमाजात्, सकलभुवनात्—निर्वासिता, निर्वासिता, निर्वासिता (मूर्च्छति)।

**अरुण०।** निर्वासितो निर्वासितो निर्वासितः !!! ( मूर्च्छति )।

**प्रचण्ड०।** हाः हाः हाः ! ( उच्चैर्हसति )।

( नेपथ्ये )

अहो अहो अहो ! अस्तं गतोऽरुणकिरणः, अस्तं गतः अस्तं गतः।
मुद्रिता कमलकलिका, मुद्रिता मुद्रिता !

अहो अहो अहो !!!
अहो अहो अहो !!!
अहो अहो अहो !!!

[ इति पञ्चम-दृश्यम ]

——०——

## षष्ठ-दृश्यम्

[ विदायग्रहणम् ]

**स्थानम्**—यक्षगृहम्।

**समयः**—सन्ध्या।

( ततः प्रविशन्ति अरिन्दमः अरुणकिरणः सुदर्शना कमलकलिका च )

**अरुण०।** परमश्रद्धेयौ मातापितरौ ! भवतोः श्रीपादपद्मेषु सहस्र-कोटिप्रणामान् विज्ञाप्य याचेऽहं विदायं भवतोः सकाशात् एकवत्सर-कालार्थम्।

**अरिन्दमः।** विदायम् ? तत् कथं प्राणाधिक ! तत् कथम् ? विदायस्य का कथा अत्र सहसा ?

**सुदर्शना।** नयनतारक पुत्र मम ! किमेतत् तव नवकौतुकम् ? खेलति चपलश्चन्द्रः सरलतारकाभिः सह मेघावरणेन स्वात्मानम् एकक्षणे गोपयित्वा, परक्षणे तु सगौरवं प्रकटय्य सलीलम्। धावति चञ्चलः पवनः वेणुवनमध्ये तनु-वेणुपत्राणि एकक्षणे स्पृष्ट्वा परक्षणे तु त्यक्त्वा सलीलम्। नृत्यति चटुलः

भ्रमरः पुष्पवीथिकायाम् प्रस्फुटित-पुष्पाणि एकक्षणे आलिङ्ग्य, परक्षणे तु परित्यज्य सलीलम्। ईदृशे लीलोज्ज्वले कौतुककलिते विरहमिलने तु विश्वनियमः। प्राणप्रिय मम ! किं तव विदायः ईदृशः केवलम्, नान्यत् ?

अरुण०। परमादरिणि मातृदेवि ! असीमा तु भवत्याः करुणा। किन्तु जननि ! नेदं कौतुकम्, इदं कठिन-रुक्ष-सत्यम्।

सुदर्शना। तत् कथं वत्स ? तत् कथम् ? किं संघटितम् अकस्मात् ?

कमल०। अशेष-गौरवभाजन जननि मम ! ममैव दोषात् तव प्राणाधिकः पुत्रः "मायामदिर" पद्मवनस्य रक्षणावेक्षणकर्मणि अनवहितो भूत्वा कर्तव्य-कर्मावहेलनदोषेण दोषी अभवत्। ततः श्रीलश्रीयुक्त-कुवेरराजेन अलकापुरीतो निर्वासित एकवत्सरकालार्थम्।

अरिन्दमः। हा हतोऽस्मि, हा हतोऽस्मि ! पुत्रमुखचन्द्रदर्शनेन विना किं प्रयोजनं मम अधन्येन, अगण्येन, अपुण्येन जीवनेन ? धिङ्मां, धिङ्मां धिङ्माम्।

सुतः पितुर्जीवन-सूर्यरश्मि-
र्गतिश्च तज्जीवन-निम्नगायाः।
क्व सूर्यसत्ता यदि नास्ति रश्मि-
र्गतौ गतायां म्रियते नदी क्व ॥७०॥ (रोदिति)

सुदर्शना। नाथ ! धैर्यं धारय। ईदृशी व्याकुलता न त्वयि शोभते। वत्स ! किं तवापराधः प्रमाणीकृतः ?

अरुण०। सम्पूर्णतया, मातः ! सम्पूर्णतया।

सुदर्शना। ततो न दुःखस्य कथा अत्र। जीवनसर्वस्व मम ! न्यायो हि जगतो भित्तिस्वरूपः। ततो न्यायस्य अनन्तमहिमा, असीमगरिमा अपरिसीम-मधुरिमा च सर्वथा सर्वदा रक्षणीयाः। अत एव वत्स ! मा भैषीः, नाथ ! मा व्याकुलो भव, कन्यके मम ! मा भव शोकक्लिष्टा। मा कुरु सत्यधर्म-विजयरथस्य पन्थानं पिच्छिलं तप्ताश्रुसेचनेन।

**कमल०।** न करोमि तत् प्राणप्रिय-मातृदेवि! कदापि न करोमि तत्। सत्यं नु गुरुतर-कर्तव्यकर्मावहेलनपरौ आवाम् ततः शास्तिः प्राप्या आवयोरवश्यमेव। तथापि, तथापि—

**अरुण०।** तथापि, तथापि निर्वासनम्, निर्वासनम्, निर्वासनम्! कठोरतमं कर्कशतमं करालतमं नामैतन्निर्वासनम्। यद्यप्यहं जाने यत्—एतद् युक्तिसङ्गतं धर्मसङ्गतं न्यायसङ्गतञ्च, तथापि स्मरणमात्रेण स्तब्धीभवति मम जीवननदी, नीरवीभवति मम मनोवीणा, निर्वाणीभवति मम प्राणप्रदीपः शून्यीभवति चात्मपात्रम्। अहो किं करोमि, किं करोमि, किं करोमि मन्दभाग्योऽहम्।

**कमल०।** नाथ! ज्ञानिगुणिमानिजनस्त्वम्, न त्वां किञ्चिदपि उपदेष्टुमर्हाम्यहम्। तथापि वदामि—प्रेमपीड़िता भूत्वा—यत्, प्रेम हि सर्वस्थान-काल-पात्रविजयि—निकटे वा दूरे वा वर्तमाने वा भविष्यति वा; एकत्र वा अन्यत्र वा प्रेम राजते अच्छेद्यम् अदाह्यम् अक्लेद्यम् अशोष्यम् अवध्यम् अचलम् अम्लानञ्च चिरम्।

ततः किं वा करिष्यति निर्वासनम् आवयोः? निरन्तरं द्रक्ष्यामि तवैव मधुरूपम्, निरन्तरं श्रोष्यामि तवैव सुधावाणीम्, निरन्तरं पास्यामि तवैव प्रेमामृतम्। ततः का मे शङ्का तव वा?

उच्छिद्यते प्रेम न देशकालयो-
श्छेदान्न मनश्छेद इहैक-कारणम्।
योगः पुनर्नौ मनसोः स्थिरो यदि
प्रेमापि तर्हि स्थिर इत्यवेद्यताम्॥७१॥
पश्यायमर्कः कियतो विदूरा-
न्निपात्य नित्यं किरणान् धरणाम्।
योगं विधत्ते कुशलं यमन्यैः
स किं विनश्येत् किरणेष सत्सु॥७२॥

अम्भोजमुद्यानसरोवरस्थं
विकीर्य सर्वत्र निजं सुगन्धम् ।
योगं विधत्ते मनुजैर्विदूरै-
रासौरभस्थायिनमत्युदारम् ॥७३॥

वृक्षे वसन् कोकिल एष कृष्णः
कण्ठेन सर्वत्र विसर्पितेन ।
योगं विधत्ते निविड़ं नरैस्तं
यः कण्ठरोधेन विना न नश्येत् ॥७४॥

अनयैव दिशा—

प्रेमा गभीरोऽश्नुति यावदावयो-
स्तावद् भयं नास्ति दवीयसोरपि ।
किञ्चावधिर्वर्षमितो न दुस्तरः
सोढुं क्षमे कल्पमपि त्वदाशया ॥७५॥

**अरुण०** । सत्यम् । तथापि, न जाने किं करिष्याम्यहं सुदीर्घवत्सर-कालं व्याप्य ? न जाने ।

भवतु, समागतो मम विदायकालः । कामये सर्वेषां प्रसन्न-प्रीतिम्, मधुर-मैत्रीम् अनिन्द्याशिषञ्च । इयमेव प्रीतिः, इयमेव मैत्री, इयमेव चाशीर्भविष्यति मम श्रेष्ठपाथेयम् अतः परम् ।

**सुदर्शना** । नयनालोक मम ! परमजनन्याः पुण्याशिषो वर्षन्तु तव धन्यमस्तके निरन्तरम्—आलोकेन, आनन्देन अमृतेन च तव प्राणमनो-जीवनानि पूर्णीकृत्य सगौरवम् ।

**अरुण०** । यामि यामि यामि । स्वर्गं त्यक्त्वा यामि नरकम्, नन्दन-काननं त्यक्त्वा यामि मरुस्थलम्, आनन्दकुञ्जं त्यक्त्वा यामि शोककारागारम् । यामि यामि यामि । ( वेगेन प्रस्थितः ) ।

**नेपथ्ये**

अहो अहो अहो । अस्तं गतो दिनमणिः आगता च घोरघन-निशीथिनी ।

वहति प्रबला झञ्झा, पतति प्रखरा वृष्टिः, नदति भीमो वज्रः स्फुरति च कराला विद्युन्निरन्तरम् ।

अहो अहो अहो । कुत्रालोकः ! कुत्रानन्दः ! कुत्रामृतम् । कुत्र कुत्र कुत्र !

आनन्दब्रह्मवन्दना

ब्रह्म परममृच्छतु मम चित्तमशम-तान्तम ।
सच्चिन्मयमुज्झितभयमर्जित-जय-कान्तम ॥७६॥
हे सुखमय नित्यसदय ! देहि विनयवित्तम् ।
अस्तु निभृतमद्य चलित-काम-कलित-चित्तम् ॥७७॥
ब्रह्मामृत-पानदलित-भेद-ललित-बुद्धिः ।
द्विज-मतङ्ग-भेदभङ्ग-जनिततुङ्ग-सिद्धिः ।
स्यामहमित-पूर्णशात ऊर्मिरहित-वार्द्धिः ॥७८॥

[ इति षष्ठ-दृश्यम् ]

—०—

सप्तम-दृश्यम्

[ निर्वासन-जीवनम् ]

स्थानम्—रामगिर्याश्रमः ।

समयः—प्रभातम् ।

( ततः प्रविशति विरहक्लिष्टो यक्षः )

यक्षः । अहो किं करोमि, किं करोमि, किं करोमि ? मम प्राणप्रतिमाया अलकाया यक्षराजेन निर्वासितोऽहम् अत्र श्रीरामचन्द्रस्य जननीसीतायाश्च पुण्यपादरजःपूते स्निग्धच्छायाशीतले रामगिरिस्थिते आश्रमे वहुकष्टेन जीवनं यापयामि जीवन्मृतवत् ।

अहो ! कुत्र मम प्राणप्रिया पत्नी ? तस्याः श्रीमुखदर्शनाभावेन रिक्तानि तिक्तानि च जातानि मम सर्व-प्राणमनोजीवनानि सम्पूर्णतया। प्रियायाः कुशल-संवादम् अहं वाञ्छामि अचिरेण। को जानाति सा अद्यावधि सुस्था वर्तते न वा, को जानाति ? मन्ये, मद्विरहाकुला सापि जीवन्मृतावत् तिष्ठति निरन्तरम्। अहो ! कः कृपया आनेष्यति मां तस्याः संवादम् ? कः कः कः ? हा हतोऽस्मि हा हतोऽस्मि, हा हतोऽस्मि !

अद्य आषाढ़स्य प्रथम-दिवसः। आगतो विमलः शीतलः कोमलो वर्षा-ऋतुः शीतलीकृत्य सर्वदिशस्तापयित्वा केवलं विरहिजनानां चित्तानि भृशम्। अहो ! किं करोमि, किं करोमि, किं करोमि ? (रोदिति)

(सहसा दृष्ट्वा) अहो ! को नु एष पर्वतशिखरे ? जलभाराक्रान्तो मृदु-मन्थरः मोहनमधुरो मेघः ? भवतु, इममेव प्रेरयिष्याम्यलकापुरीं मम प्रियतमासकाशे दूतरूपेण।

भवत्वयं मेघो धूम-ज्योतिःसलिल-मरुतां समूहरूपम् अचेतनं वस्तु--तथापि ममाकुलप्राणैः स प्राणायितो भूत्वा मम अवश्यमेव श्रेष्ठ-बान्धवः इव, मम प्रियतमभ्राता इव मम सहृदय-वार्तावहः सन् गमिष्यति देशदेशान्तरं सानन्दं मम प्रियासकाशं सुनिश्चितमेव।

(नतजानुः कृताञ्जलिः) हे भुवनविदितवंशजात इन्द्रस्य प्रधानपुरुष ! यथेच्छ-विग्रहधारिमेघमहोदय ! प्रणमामि भवन्तम्। गृह्णातु भवान् कृपया मम दीनहीनपूजार्घ्यं सानुग्रहम्। गच्छतु भवान् मम दूतो भूत्वा अलकापुरी-निवासि-मत्प्रियतमपत्नीसकाशे। अहं निर्दिशामि अलकायाः सहज-सरल-पथम्। शृणोतु भवान् कृपया—

मेघमहोदय ! सुदीर्घोऽयं पन्थाः—मम प्रियतमागृहाभिमुखी लोभनः पन्थाः। ततो यदा यदा भवान् खिन्नः श्रान्तः क्लान्तो वा भविष्यति तदा तदा कृपया श्यामल-पर्वतशिखरेषु श्रीपदं न्यस्य विश्रामसुखं लभतां सानन्दम्। पुनः, यदा यदा भवान् क्षीणो जीर्णः शीर्णो वा भविष्यति, तदा तदा कृपया

शीतल-तटिनी-धारायाः पिबतु अमेयामृतं सादरम्। मा भूत् प्रियबान्धव मम कथञ्चिदपि क्लेशो भवतो मदर्थम्।

अहो! पश्यतु भवान् कृपया सम्मुखे—सहसा आविर्भूतम् आषाढ़ाकाशे मोहनम् इन्द्रधनुरेकम्—विचित्र-रत्नरागरञ्जितं विविध-रूप-रससिक्तं विकीर्ण-प्रभा-शोभा-सज्जितञ्च। तत्संस्पर्शेन मयूरपुच्छधारी श्रीकृष्ण इव भवानपि विलसिष्यति उज्ज्वलकान्तिः चतुर्दिक्षु विश्वजनानां प्राणमनांस्याहृत्य सगौरवम्।

चलतु भवान् सानुग्रहम् इत्थम् उत्तुङ्गपर्वतान् उल्लङ्घ्य, उत्ताल-स्रोत-स्वतीरुत्तीर्य, उत्फुल्ल-कान्तारान् उत्सृज्य। चलतु भवान् सानुग्रहं मदुपकाराय निःस्वार्थं निःशङ्कं निरङ्कुशम्।

यदा भवान् आगमिष्यति पथिशेषं तदा हेमपङ्कजप्रसू-पुण्य-मानससरोवर-जलं पीत्वा इन्द्रगजस्यैरावतस्य मुखपटप्रीतिं क्षणं सम्पाद्य कल्पद्रुमाणां पल्लवानि सादरं दोलयित्वा यथेच्छं विहरतु भवान् भवद्वन्धुनगरीस्थ-कैलास-पर्वते।

ततः प्रविशतु भवान् कृपया अपूर्व-रूपलावण्यमयीम् अलकापुरीं मम—मम प्रियतमायाः पुण्य-धन्यानन्य-निवासरूपाम् अमलाम् अखलां मोहनां मधुराम् अलकापुरीम्।

अहो! असंख्यपुष्पविभूषिता ललना विचरन्ति अस्या अलकानगर्या मनोरमपथेषु सलीलम्—लीलाकमलकराः कुन्दशोभितकेशा लोध्ररेणुलिप्तानना नवकुरुवकग्रथितचूडाः चारुशिरीष-सज्जितकर्णाः विकच-नीपललितसीमन्ताः। अहो! का वा तुलना तासां प्रसन्न-प्रसूनकमनीय-कामिनीनां चतुर्दशभुवनेषु! किन्तु सर्वासां मध्ये विराजते अतुलनीया मम प्रियतमा पत्नी—विधातुः प्रथमा प्रवरा प्रकृष्टा च सृष्टिः।

यातु यातु यातु तत्र, मोहन-महनीय मेघमहोदय! मम परमात्मीय! मम प्राणबान्धव! मम प्रियभ्रातः! मेघमहोदय! यातु यातु यातु तत्र मम वार्तावहो भूत्वा मम प्रतिनिधिरूपेण, मम द्वितीयजीवनच्छलेन—यातु यातु यातु तत्र कृपया सत्वरं दयालुर्निःस्वार्थः परसेवको भवान्।

हे जलद ! परमानुकम्पया मम दीनहीन-वार्तां मम प्रियतम-पत्नीसकाशे नीत्वा विचरतु भवान् यथेच्छं तत्परम् । मा भूद् भवतो विरहो भवद्दयितया विद्युता सह क्षणमपि ।

[ इति सप्तम-दृश्यम् ]

—०—

## अष्टम-दृश्यम्

[ यक्षिण्या विरहवेदना ]

**स्थानम्**—यक्षगृहम् ।

**समयः**—प्रभातम् ।

**यक्षपत्नी** । हा हतास्मि, हा हतास्मि, हा हतास्मि । अतिधीरं चलति मम समयः । एकमुहूर्तः प्रतिभाति एकवत्सररूपी मन्निकटे । विरहो विरहो विरहः । न ज्ञातवती अहं यत् विरहस्तु एतादृशो निर्ममो निर्दयः, एतादृशः कठोरः करालः, एतादृशः असहनीयः अदमनीयश्च ।—न ज्ञातवती तत् । किन्तु अधुना अनुभवामि विरहस्य विषाक्त-वृश्चिकज्वालां मन्द-भाग्याहम् । अहो ज्वलति मम सर्वशरीरं विषपृक्तवत् प्रचण्डप्रतापेन । किं करोमि, किं करोमि, किं करोमि ? को नु शक्नोति माम् ईदृश-प्रचण्ड-प्रदाहाद् रक्षितुम् ? कः कः कः ? न कोटिगङ्गानां पवित्रप्रवाहः, न कोटि-पीयूषनिर्झराणां सञ्जीवनधारा, न कोटिपारिजातप्रसूनानां शीतलप्रलेपः—कोऽपि न, कोऽपि न कोऽपि न ।

अहो आगतः सकल-कलुषनाशी सकल-शोकहारी सकलज्वलनवारी वर्षाकालः—दिशि दिशि तस्य श्यामल-शीतल-कोमलाञ्चलम् उत्क्षिप्य । किन्तु हा हतास्मि, न स समर्थो मम विरहदावज्वालां कणामात्रमपि शमयितुम् । परन्तु ज्वलति मम विरहाग्निः प्रबलतरप्रतापेन वर्षागमनेन । अहो ! किं करोमि किं करोमि, किं करोमि ?

( वहिर्दृष्ट्वा गवाक्षतः ) अहो !-किं न्वेतत् ? प्रकाण्ड एकखण्डो घनकृष्णः स्निग्धसुन्दरो मेघः समागतः सहसा मम गवाक्षपथे ? प्रथमदर्शनेनैव स प्रतिभाति मम परमबान्धव इव। तत् कथम्, तत् कथम् ? न जाने कथं मम मनः कथयति यत्, अयमेव मेघो मम प्रियतमस्य दूतः, तस्य वार्तावहो मदर्थम्।

मोहन-महनीय मेघमहोदय ! प्रणमामि भवन्तम्। सुस्वागतो भवान् अस्माकं प्राणप्रिय-पुरीमध्ये। परम करुणामय देव ! किं भवता आनीतो मदर्थं कश्चित् शुभसंवादः ? भृशं व्याकुलाहं जाता प्रियसन्देशार्थम्। ततः कथयतु, कथयतु भवान् भवतो मधुरमोहनवार्ताम्। ( श्रवणमभिनीय ) अहो किं न्वेतत् ? किमयं मम प्रियतमकण्ठस्वरः ? अहो आनन्दः, अहो आनन्दः, अहो आनन्दः !

( नेपथ्ये यक्षः )

मम प्राणप्रतिमे ! तव कोमलस्पर्शकातरोऽहम् आलिङ्गामि त्वद्गृह-विचरणशीलं हिमाचलादागतं दक्षिणपवनं साग्रहम्। स एव भवतु दूर-दूरान्तस्थितयोरावयोर्मिलनसेतुः।

प्रियतमे मम ! एकवत्सर-शापकालस्य अष्टमासा हि विगता बहुक्लेशेन। ततोऽवशिष्ट-चतुर्मासा अपि यापनीया येन तेन प्रकारेण आवाभ्याम्—अतः परं मिलनम् मधुरमिलनम्, मोहनमिलनम् महनीयमिलनम्, केवलं मिलनं मिलनं मिलनम्।

**यक्षपत्नी।** अहो आनन्दः, अहो आनन्दः, अहो आनन्दः !

स्वप्नो नु माया नु मतिभ्रमो नु एषः ? न जाने न जाने न जाने तत्। केवलं जाने यत्—अयं मम प्राणमनोहारकस्य प्राणमनोहारक-कण्ठस्वरः। न जाने कथं तत्श्रोतुं समर्थाहम् न जाने न जाने तत्—केवलं जाने यत् तेनैव मधुर-कोमल-शीतल-कण्ठस्वरेण शीतलीभूतानि मम तप्त प्राणजीवनानि निमेषेण—तदेव यथेष्टं मत्पक्षे, तदेव यथेष्टम् तदेव यथेष्टम्।

अहो आनन्दः ! अहो आनन्दः ! अहो आनन्दः !

विरहोऽतिपवित्रोऽयमतिकल्याणदायकः।
अत्यन्तपरिपूर्णश्च यतोऽत्र प्रथमं वयम् ॥७९॥
वहिर्देशात् समाकृष्य नेत्रद्वन्द्वं समाहिताः।
पश्यामोऽन्तर्गतां मूर्तिं प्रियस्य दूरवर्तिनः ॥८०॥
रुद्धेषु वाह्यचक्षुःसु स्फुटन्त्यान्तर-दृष्टयः।
शक्तिमत्यो विशेषेण या वाह्य-दृष्टिशक्तितः ॥८१॥
विप्रयोगदशायां हि तत एव प्रियो जनः।
उपलब्धो भवेदात्मगहने हृदयोदरे ॥८२॥
तत् क्षोभ-शोक-रोषणां न स्थानं विरहः परम्।
साधनानुभव-ध्यानावसरः परमोत्तमः ॥८३॥
पद्मिन्यत्र हि दृष्टान्तो या तमिस्रतिरोहिता।
अपेक्षते निशां सर्वामा भास्करविलोकनात् ॥८४॥
कदम्बकलिकां पश्य, सा हि मासान् बहून् सती।
ध्यायन्ती योगिनीवेशा वर्षागममपेक्षते ॥८५॥
कोकिलापि चिरं कालं मौनव्रतपरायणा।
उत्कण्ठाकुण्ठकण्ठेन वसन्तर्तुं प्रतीक्षते ॥८६॥
ममापि साधना भूयादेवमेव शुभप्रदा।
शान्ता धीरा विनम्रा च प्रियस्यापेक्षयाऽक्षया ॥८७॥

[ इत्यष्टम-दृश्यम् ]

—०—

## नवम-दृश्यम् ( अन्तिम-दृश्यम् )

[ शाश्वतमिलनम् ]

**स्थानम्**—यक्षगृहम् ।

**समयः**—प्रभातम् ।

( ततः प्रविशतो यक्षस्तत्पत्नी च )

**यक्षः** । प्रियतमे ! प्रियतमे मम ! कुत्र त्वम् ? प्रत्यावृत्तोऽहं त्वच्छ्रीपादद, पद्मतले सुदीर्घैकवत्सरादनन्तरम् । अविश्वास्यम् इदं सर्वं प्रतिभाति—स्वप्नवत् मायावत् मरीचिकावत् । किं सत्यं न्वेतत् ? किं वास्तवी इयं पुरी, वास्तवी इयम् अट्टालिका, वास्तवी इयं प्राणप्रतिमा । न जाने, न जाने न जाने, तत् । केवलं जाने यत्—एकवत्सर-निर्वाणो मम प्राणप्रदीपः प्रज्वलितः स्वत एव सहसा ; एकवत्सरकालनीरवा मन मनोवीणा झङ्कृता स्वत एव सहसा ; एकवत्सरमुद्रितं मम जीवनशतदलं विकसितं स्वत एव सहसा । अहो सौभाग्यम्, अहो सार्थकता, अहो सम्पूर्णता !

**यक्षपत्नी** । क एषः ? किं मम प्रियतम आगतः ! अहमपि न जाने इदं सत्यं नवा । प्राणप्रतिम मम ! गृहाण मम सभक्तिप्रणामाञ्जलिम् ।

**यक्षः** । जीवनसर्वस्व मम ! विरहक्लिष्टां त्वां दृष्ट्वा उद्वेल्लति मम मनः । किन्तु चिन्तय मम प्राणरस ! विरहस्याप्यस्ति प्रयोजनम् । निशीथस्य अन्धकारात् परमेव सम्यक् हसति प्रभातस्य हिरण्यद्युतिः । ग्रीष्मस्य दावदाहात् परमेव सम्यक् पतति वर्षायाः शीतलधारा शीतस्य शुष्कतायाः परमेव सम्यक् लसति वसन्तस्य पुष्पस्तवकः । तथैव विरहात् परमेव मिलनं भवति शुद्धतरं पूर्णतरं मधुरतरम् ।

**यक्षपत्नी** । सत्यं सत्यं पूर्णसत्यम् । भवतु अद्यावधि शुद्धतर-पूर्णतर-मधुरतर-मिलितजीवनम् आवयोः परमजननीश्रीचरणारविन्दतले नित्य-

निवेदितम् । ज्वलतु तत् तस्याः पूजाप्रदीपरूपेण नित्यम् ; ध्वनतु तत् तस्याः पूजाशङ्खरूपेण नित्यम्, विकशतु तत् तस्यांः पूजाकुसुमरूपेण नित्यम् ।

स्वर्गीय एष प्रणयोऽस्त्यपूर्वो
मालिन्यलेशोऽपि न यत्र तिष्ठेत् ।
जाने पुनर्दैववशादिहाऽसी-
न्मालिन्ययोगः कलयापि नूनम् ॥८८॥

आवां यतः प्रेमतरङ्गमग्नौ
नाचिन्तयाव प्रकृतं विधेयम् ।
पापेन तेन प्रणयोऽतिमिष्ट-
स्तिक्तत्वमाप्तः कियते दिनाय ॥८६॥

इदं पुनर्मेलनमावयोर्यद्-
विच्छेदहीनं तदनन्तकालम ।
प्रेम्णो यथा स्याव सुयोग्य-साधकौ
सङ्कल्पमावां हि तथाद्य कुर्वः ॥९०॥

यक्षः । भवतु तत्, प्रिये ! भवतु तत् ।

यक्षपत्नी । प्रियतम मम ! किम् अन्यत् ते प्रियं कर्तुं शक्नोमि !

यक्षः । इतोऽपि प्रियं स्यात् ! तथापीत्थमस्तु ।

( भरतवाक्यम् )

अपसरतु धराया द्वेष-हिंसादिवृत्तिः
सदल-दलपतीनामस्तु चेतः प्रसन्नम् ।
प्रणयियुगलमास्तामस्त-दुर्दैववृत्तं
विरत-विरहखेदं नित्य-नेत्राञ्जनं नः ॥९१॥

[ इति नवम-दृश्यम् ]

( समाप्तमिदं मेघमेदुरमेदिनीयं नाम नाटकम् )

—०—

"विद्यया विन्दतेऽमृतम्"

# PRACYAVANI

( Institute of Oriental Learning )
( Registered Under Act XXI of 1860 )

**Office—**
3, Federation Street
Calcutta-9
( Phone-: 35-1995 )

## FOUNDERS

Established in 1943,
By the Learned Couple :

Dr. Jatindra Bimal Chaudhuri M. A., Ph. D. ( London ), Kavyatirtha.

Formerly, Officer-in-charge of the Sanskrit-Pali Department, India Office Library, London ; Lecturer in Sanskrit and Bengali, School of Oriental Studies, London University ; Professor and Head of the Department of Sanskrit, Presidency College, Govt. of West Bengal, Calcutta ; Principal, Sanskrit College, Govt. of West Bengal, Calcutta ; Lecturer in Sanskrit, University of Calcutta ; Secretary, Vangiya Sanskrit Siksha-Parisat, Govt. of West Bengal, Calcutta ; Author of numerous Research Works and articles in English, Bengali and Sanskrit ; and of many Modern Sanskrit Dramas, Poems and Songs ; Member, Central Sanskrit Board, Govt. of India etc, etc.

And

Dr. Roma Chaudhuri, M.A., D. Phil. (Oxford), F.A.S.B.

Formerly, Professor and Head of the Department of Philosophy, Lady Brabourne College, Govt. of West

Bengal, Calcutta, and Lecturer in Philosophy, University of Calcutta; Principal of the above College and now Vice-Chancellor of Rabindra Bharati University. Author of many Research Works and Articles in English, Sanskrit and Bengali.

Also of more than 30 Modern Sanskrit Dramas on various topics. Closely Connected with many celebrated Cultural, Religious, Educational Organisations. Member of Syndicate, Calcutta University, Central Sanskrit Board (New Delhi), Sahitya Akademy (New Delhi) etc. etc.

## Aims

Propagation and Popularisation of Sanskrit Language and Literature, Learning and Culture amongst all; making arrangements for Lectures, Seminars, Symposia, Sanskrit Song-Recitals, staging of Sanskrit Dramas, Debates and Discourses; Sanskrit Pathsalas or Catuspathis; Lessons in Sanskrit Dialogues and Sanskrit Songs; Libraries of printed books and Manuscripts, Publication in English, Bengali, Sanskrit and Hindi, and so on.

## DEPARTMENTS

(1) **Lectures, Seminars, Symposia, etc.**—Regular Lectures and the like on different Oriental and Cultural Topics by well-known scholars are arranged.

(2) **Sanskrit Song-Recitals, Sanskrit Debates, Extempore Speeches, Discourses and the like**—Regularly arranged,

(3) **Sanskrit-Pali-Dramas**—Pracyavani-Sanskrit-Pali-Dramatic-Troupe has been staging Modern Sanskrit Dramas, composed by late, Dr. Jatindra Bimal Chaudhuri (30 in number) and Vice-Chancellor Dr. Roma Chaudhuri (30 in number) on an average, 40+50 times a year, for more than 25 years continuously, since 1945, with great success.

before highly appreciative audiences of thousands strong, all over India, also outside, as follows :—( in nearly 80 places ) :—

Rangoon, Nepal, ( Kathmandu ), Raxaul ( Nepal-India Border ), Kashmir ( Srinagar ) Jammu, Calcutta, Delhi, Bombay, Madras, Pondicherry, Bangalore, Goraksapur, Jamnagar, Dwarka. Okha ( Saurastra ), Jaipur, Nainital, Ujjain, Indore, Ajmere, Jubbalpur, Saugar, Puri, Sambalpur, Jalpaiguri, Haridwar, Hrisikesh, Allahabad, Kanpur, Lucknow, Agra, Varanasi, Aligarh, Sitampur, Vrindavan, Mathura, Deoghar, Mazaffarpur. Motihari, Patna, Chapra, Purulia, Bankura, Kulti, Agarpara, Navadwip, Dhanbad, Jamsedpur, Burnpur, Siuri, Contai, Midnapore, Durgapur, Burdwan, Chittaranjan, Barranagar, Sinthi, Hoogly, Sodepur, Burnpur, Kharagpur, Mallikpur, Mayapur, Jayanagar-Mazilpur, Howrah, Sibpur, Daksineswar, Kamarpukur Village, (W. Bengal), Pyradanga, Village (Nadia, W, Bengal), Nimpith Village, (Jayanagar-Mazilpur), Churulia Village (W. Bengal), 24 Pargs, etc, etc.

It had the great honour of staging three Sanskrit Dramas•" viz, Amara-Miram" on the holy life of Sri Mira Bai, "Bharata-Vivekam" on the holy life of Swami Vivekananda and "Bharatacharyam" on the holy life of the Rastrapati Dr. Radhakrishnan in October 1963, April 1964 and October, 1966, respectively, in Rastrapati-Bhavan, New Delhi, in the benign presence of the revered Rastrapati Dr. Sarvapalli Radhakrisnan, and a large number of Central Ministers, High Officials, Scholars and Devotees. The Rastrapati graciously donated Rs. 500/- and Rs. 1500/- as his blessings to Pracyavani, for the last two Dramas on 12. 10. 64. and 29. 10. 66.

It also staged the first-ever Pali-Drama, in the whole History of Pali Literature "Bimba-Sundari-Patibimbanam" in Rangoon in 1961.

( 4 ) **Catuspathis**—It maintains three Catuspathis, one exclusively for ladies. The number of students is uniformly high, and results good.

( 5 ) **Lessons in Sanskrit Dialogues and Songs**—Arranged.

( 6 ) **Library**—There is a huge Library of Printed books in English, Bengali, Sanskrit, Hindi ; as well as a large and valuable collection of Sanskrit Manuscripts.

( 7 ) **Press**—Good English, Bengali and Sanskrit Presses of its own.

( 8 ) **Publication**—More than 150, in English, Bengali and Sanskrit, including valuable Research Works and Modern Sanskrit Dramas, and Song-Collections ; also "Pracyavani" Journals ( English and Bengali ). Also many Modern Sanskrit Dramas composed by ( Late ) Dr. Jatindra Bimal Chaudhuri and Vice-Chancellor Dr, Roma Chaudhuri.

( 9 ) Recognised and aided by Central and State Governments.

( 10 ) New and Extensive Development-Schemes, in all the Departments undertaken.

It also had the great honour of winning the coveted "Svarna-Kalasa" or Golden Pitcher for West Bengal for the first time in 1967, by standing first in All-India Sanskrit Drama Competitions, organised by All-India-Kalidasa-Samaroha in Ujjain, for the Modern Drama "Kavi-Kula-Kokilam" on the holy life Sri Kalidasa composed by Dr. Roma Chaudhuri.

—o—

**Sanskrit Dramas by Dr, Jatindra Bimal Chaudhuri**

**Sesies No. 1 Panca-Matrika-Lila Series**

1. Dhriti-Sitam. On Sri Sri Sita.
2. Ananda-Radham. On Sri Sri Radha Rs. 8/-
3. Niskincana-Yasodharam on Yosodhara Gopa, Holy Consort of Lord Buddha. Rexin Bound Rs. 8. Paper Cover Rs. 10/- only.
4. Priti- Visnupriyam. On the early life of Sri Visnupriya, Holy Consort of Sri Krisnacaitanya Mahaprabhu. Rs 8. only
5. Bhakti-Visnupriyam on the holy life of Sri Visnupriya, the Holy Consort of Sri Krisnacaitanya Mahaparabhu, from Mahaprabhu's Renunciation to the end of Sri Visnupriya's life. Rs. 8. only.
6. Amara-Miram On Sri Mira Bai. Rs 6/-
7. Bharata-Laksmi. On Rani Laksmi of Jhansi. Rs 8/-
8. Sakti-Saradam. On Sri Saradamani Devi, Holy Consort of Sri Ramakrisna Paramahamsadeva. From her nineteenth year to 1886 A. D. Rexin Rs. 10/. only ; Paper CoverRs. 8/. only.
9. Mukti-Saradam. On Sri Saradamani Devi, Holy Consort of Sri Ramakrisna Paramahamsadeva. From 1887—1920 A. D. Rs. 8.

**Series No. 2 on Mother India.**

10. Mahimamaya-Bharatam. On the Irrigation Policy of India throughout the Ages. Rs 6/-
11. Melana-tirtha-Bharatam. India's Contribution to Universal Brotherhood throughout the Ages deliniating episodes from the lives of Vedic Sage Atharvan, Sage Agastya, Emperor Asoka, Guru Nanak, Sri Ramakrisna Paramahamsadeva. Ravindranatha, and Mahatma Gandhi. Paper Cover Rs. 6/- Rexin : Rs. 8/-

**Series No. 3 on Indian Leaders of Thought and Action.**

12. Bharata-Hridaya-Aravindam On Sri Aurobindo. Paper Cover 8/-
13. Bhaskarodayam. On the early life of Ravindra Nath (up to his twenty-fifth year). With Principal Dr. Roma Chaudhuri's English Translation. Rexin Bound Rs. 16/-. Sanskrit Text and Translation: Separately bound Rs. 8/- and Rs. 10/-
14. Bharata-Bhaskaram on Ravindranath (from his 26th to 50th year).

15. Bhuvana-Bhaskaram on Ravindra Nath (from his 51st year to the end of his life).
16. Bharata-Janakam on Mahatma Gandhi. Rs. 6/- ; Rexin Bound Rs. 8/-.
17. Desabandhu-Desapriyam-on Desabandhu Chittaranjan and Desapriya Jatindra Mohan. Rs. 6,
18. Subhasa-Subhasam-on Netaji Subhas Chandra Bose. Rs. 6,
19. Raksaka-Sri Goraksam—on Sri Goraksanath. Rs. 8,

**Series No. 4. On Vaisnava Saints :**

20. Vimala-Yatindram on Vedantacarya Sri Ramanuja. Rs. 8/- ; Rexin Rs. 10/-
21. Mahaprabhu-Haridasam on Bhakta-Yavan Haridasa, one of the foremost disciples of Sri Krisnacaitanya Mahaprabhu Rs 8/- ; Rexin Rs. 10/-
22. Dina-Dasa-Raghunatham. On Sri Raghunath Dasa Gosvamin Prabhu, one of the Six Vrindavana Gosvamins. Paper Cover Rs. 8/- ; Rexin Rs. 10/-.

**Series no. 5. Adaptations from Foreign Dramas**

23. Venice-Vanijam-(from Shakespeare's Merchant of Venice). Rs. 6
24. Othello (from Shakespeare's "Othello"). Rs. 6

**Pali-Drama.**

**The only Pali Drama ever written.**

25. The Bimbasundari-Patibimbanam on Sri Yasodhara, Holy Consort of Prince Siddhartha, depicting the entire life of Sri Sri Yasodhara.

**Other Works of Dr. J. B. Chaudhuri**

1. Contributions of Women to Sanskrit Literature in seven big volumes. 95.00
2. Contributions of Muslims to Sanskrit Learning :
   Vol. I. Sangita-Malika by Md. Shah 10.00
   Vol. II. Khan Khanan Abdur Rahim and Contemporary Sanskrit Learning. (Paper Rs. 6) Rexin. 8.00
   Vol. III. Samudra Sangama by Md. Dara Sukoh 20.00
3. (a) Muslim Patronage to Sanskrit Learning : (Belles-Letters) 2nd Ed. 12.00

(b) Muslim Patronage to Astrology and Astronomy (Jatakodaharana-Paddhati) 16,00
(c) Biography. Rudrakavi on his Muslim Patrons. 6.00

4. Sanskrita Duta-Kavya Samgraha in seven volumes with two original Sanskrit commentaries by Dr. J. B. Chaudhuri on the Ghatakharpara Kavya and the Padankaduta called Sasvati and Bhasvati respectively 30.00
5. Sanskrit Poets of Mediaeval India Based upon Anthologies. (5 Volumes) 35.00
6. (a) Meghaduta with commentaries of Bharata Malika and others 20.00
(b) Meghaduta with commentaries of Sasvata and Sanatan Gosvamin 20.00
7. Vangiya Duta-Kavyetihasa (in Sanskrita). 8.00
8. Contributions of Bengal to Smriti Literature Vols. 1-3 ( 3rd vol. in Press ) 14.00
9. Historical Kavyas in Sanskrit, 4 Vols. 39.00
10. Poetical Works, etc.
A. Original Composition in Sanskrit
(a) Sakti-Sadhanam. 4.00
(b) Several commentaries on Sanskrit Texts. See Detailed Catalogue 5.00
(c) Sanskrit and Bengali Songs of Dr. Jatindra Bimal Chaudhuri, with Bengali Translation by Principal Dr. Roma Chaudhuri, Principal, Lady Brabourne College—in Seven Parts. 15.00

B. Works on Hindu Dharma with Bengali Translation
(a) Bhagavad Gita (Rexin) 6.00
(b) Sri Sri Candi 6.00

11. Bengali Works
(a) Pt. Iswar Chandra Vidyasagar 4.00
(b) Gaudiya Vaisnavder Sanskrit Sahitye Dan 4.00
(c) Prabandhavali in Eight Vols (Rs. 5 each) 40.00
(d) Buddha-Yasodhara— (Paper Rs. 5. ) Rexin, Rs 7. 5.00
(e) Janani Yasodhara 8.00

12. The Position of Women in the Vedic Ritual 15.00

13. Miscellaneous
(a) Sanskrit and Prakrit Books in the India Office Library by Dr. J. B. Chaudhuri (as Joint Author) in four big volumes 250.00
Pracyavani, 12 Volumes ; each volume Rs. 12 144.00
(c) .Gaura-tattvam 8.00
(d) Nripati-niti-garbhita-vritta 20.00

## WORKS OF Dr. ROMA CHAUDHURI

( Principal, Lady Brabourne College, Calcutta, Govt. of W. Bengal )

**English**

1. **Doctrines of Nimbarka and His Followers** ( Vaisnava-Vedanta )—In 3 Volumes. Published by Asiatic Society of Bengal. Rs. 18·00
2. **Sufism and Vedanta.** In 3 Volumes. 2 Volumes Published ( 2nd Edition, 3rd vol. in the Press. ) Rs. 18·00
3. **An Indo-Islamic Synthetic Philosophy** ( Comparative Survey of India and Islamic Views, viz. of the Upanisads, Vedanta Systems, Holy Quran and Sufi Systems ) Rs· 20·00
4. **Doctrines of Srikantha** ( Saiva Vedanta ). In 3 Volumes. 2 Volumes published. 3rd Vol. in the Press. Rs. 52-00
5. **Sanskrit and Prakrit Poetesses.** Rs. 15·00
6. **Philosophical Essays** ( Collection of Articles in English and Bengali ). In the Press.

**Bengali**

1. **Nimbarka Darsan** Rs. 8·00
2 **Sufi Darsan O Vedanta** Rs. 8·00
3. **Sanskrita O Prakrita Nari Kaviganer Kavitavali.** Published by Visva Bharati. Rs. 2.50
4. **Vedanta Darsan** ( 3rd Ed ) Published by Visva Bharati.
5. **Dasa Vedanta Sampradaya O Vanga-Desa.** In 3 Volumes. First Vol. ( on Sankara-Vedanta ) Published. Rs. 30·00

6. **Sahitya-Kana** Rs. 3·00
7. **Sanskritanka Roga.** Rs. 3·00

**Name of the Modern Sanskrit Dramas composed**

**By**

**( Dr. Roma Chaudhuri )** **( Rs. 7/each**

1. **Yatindra-Yatindram** (on the holy life of Dr. Jatindra Bimal Chaudhuri )
2. **Samkara-Samkaram** ( on the holy life of Advaita-charya Sri Samkara )
3. **Desa-Dipam** ( on a nationalistic theme, on the holy life Jawans )
4. **Palli-Kamalam** ( on village Life of Bengal )
5. **Nagara-Nupuram** ( on Town Life )
6. **Sansaramritam** ( on Modern Life )
7. **Bharatacharyam** ( on the holy life of our revered Rastrapati Dr. S. Radhakrishnan )
8. **Abhedanandam** ( on the holy life of Swami Abheda-nanda, composed on the auspicious occasion of his holy Birth-Centenary )
9. **Nivedita-Niveditam** ( on the holy life of Sister Nivedita, composed on the auspicious occasion of her holy Birth-Centenary )
10. **Rama-Charita-Manasam** ( on the holy life of Saint Tulsidas )
11. **Yuga-Jivanam** ( on the holy life of Sri Ramakrishna Paramahamsa Deva )
12. **Rasamaya-Rasamani** ( on the holy life of Rani-Rasamani )
13. **Prasanna-Prasadam** ( on the holy life of renowned Kali-Sadhaka of Bengal, Ramaprasad )
14. **Kavi-Kula-Kokilam** ( on the holy life of Mahakavi Kalidasa )
15. **Chaitanya-Chaitanyam** ( on the holy life of Sri Gauranga )

16 **Megha-Medura-Mediniyam** ( on the prior and later. unknown portions of the Megha-duta of Kalidasa )

17. **Gana-Devata-Natakam** ( on the life the of renowned writer Sri Tarashankar Banerji )

18. **Agnivina-Natakam** ( on the life of Poet Kazi Najrul Islam )

19. **Kavi-kula-kamalam** ( on the later life of Mahakavi Kalidasa )

20. **Desa-Janakam** ( on the holy life of Mahatma Gandhi, composed on the auspictous occasion of his holy Birth-Centenary. )

21. **Lenina-Vijayam** ( on the holy life of Lenin, on the auspicious occasion of his holy Birth-Centenary. )

22. **Bharata-Viram** ( on the holy life of Sri Shivaji )

23, **Tana-Tanu** ( on the holy life of Sri Tanasena )

( The above Sanskrit Dramas have been staged all over India and outside many times. "**Samkara-Samkaram**" was staged in Kathmandu, Nepal, under the auspices of Indian Embassy, in the benign presence of His Majesty, King Mahendra of Nepal and other members of the Royal Family.

"**Bharatacaryam**" was staged in Rastrapati Bhavan, New Delhi, in the benign presence of the revered Rastrapati Dr. Radhakrishnan, who donated Rs. 1500, to Pracya-vani as his blessings. By staging "**Kavi-Kula-Kokilam**" Pracya-vani—for the first time for W. Bengal—won the coveted "Svarna-Kalasa" ( Golden Pitcher ) as First Prize in the All-India Kalidasa-Samaroha in Ujjain in November. 1967.

—0—